अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–६०

# अनुवादशास्त्रम्

प्रा. राधावल्लभः त्रिपाठी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय—प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला—60

# अनुवादशास्त्रम्

प्रा. राधावल्लभः त्रिपाठी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन—प्रकाशनविभागः




कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं

न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — अनुवादशास्त्रम्

लेखकः — प्रा. राधावल्लभः त्रिपाठी

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — रू. 150.00

आय.एस.बी.एन. — 978-81-8315-409-3

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# भूमिका

विदितमेवेतद् विदुषां यच्चिरकालादमरभारती संस्कृतेति विख्याता नानाशास्त्राणि दर्शनानि चिन्तनप्रस्थानानि विचारपरम्पराश्च सन्धारयन्ती सम्पोषयन्ती वरीवर्ति। प्रथमं तिस्रो विद्याः आन्वीक्षिकी त्रयी वार्ता चेति स्वाध्यायार्थमूरीकृताः। अनन्तरं दण्डनीतिश्च शाश्वतीति निगदद्भिः ऋषिभिः चतस्रो विद्याः प्रचारिताः। एतासां चतुर्विद्यानामपि षड् वेदाङ्गानि इतिहासपुराण-मीमांसा-न्याय-धर्मशास्त्राणि संयोज्य चतुर्दशत्वमापादितम्। उपनिषत्सु ततोऽप्यधिकतरम् अष्टादश ऊनविंशतिर्वा विद्याः प्रकीर्तिताः। छान्दोग्योपनिषदि ब्रह्मविद्योपासनाय सनत्कुमारान् प्रपन्नो नारदः स्वयमधीतानां विद्यानां परिसंख्यानं कुर्वन् वर्णितः। तथाहि -

*अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ ७.१.१॥*

सनत्कुमारेण ऊर्ध्वप्रवचनदृशा एवं पृष्टो नारदस्तेन यद् यदधीतं तस्य नामसङ्कीर्तनममित्थं व्यदधात् -

*ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ ७.१.२॥*

अत्र ऊनविंशतिविद्यानां नामानि कीर्तितानि। एतावत्यः विद्याः अधीत्यापि नारदस्तु एतत् तथ्यमवगच्छति यत् स केवलं मन्त्रविद् वर्तते, आत्मविन्नैवास्तीति। अत एव स सनत्कुमारं पुनराह –

*सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि। तं मा भगवाञ्छोकस्य पारं तारयत्विति।*

*तं होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ७.१.३॥ नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥ ७.१.४ ॥ स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति। यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ७.१.५॥*

कौटिल्येन अर्थशास्त्रे आन्वीक्षिक्याः अतिशयं माहात्म्यमुर्णितम्। तथाहि -

*आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः। त्रयी वार्ता दण्डनीतिश्चेति मानवाः, त्रयीविशेषो ह्यान्वीक्षिकीति। वार्ता दण्डनीतिश्चेति बार्हस्पत्याः, संवरणमात्रं हि त्रयी लोकयात्राविद इति। दण्डनीतिरेका विद्येत्यौशनसाः, तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा इति। चतस्र एव विद्या इति कौटिल्यः। ताभिर्धर्माधर्मौ विद्यात्, तद् विद्यानां विद्यात्वम्।* अर्थशास्त्रम् १.२.१

*साङ्ख्यं योगो लोकायतं चेत्यान्वीक्षिकी।.... बलाबले चैतासां हेतुभिरन्वीक्षमाणान्वीक्षिकी लोकस्योपकरोति प्रज्ञावाक्यवैशारद्यं करोति, व्यसने चाभ्युदये च बुद्धिमत्तां व्यवस्थापति।*

*प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।*
*आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता।।* (तत्रैव)

इत्थं विद्याविमर्शे प्रस्थाने विद्यानां परिसंख्यानं निरूपणं च चतुर्दशी, अष्टादशीत्यादिरूपेण विहितम्। क्वचित्तु चतसृणां विद्यानां चतुर्दशत्वमापादितम्, यथोक्तं नैषधकारेण

*अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रथयन्नुपाधिभिः।*
*चतुर्दशत्वं समुपेदिवान्....*

अत्र चतुर्दशविद्यानामधीतिबोधाचरणप्रचारणैरन्ये विद्याभेदाः श्लिष्येरन्निति श्रीहर्षेण सङ्केतितम्। तद्यथा राजशेखरणे चतुर्षु विद्यासु पञ्चमी साहित्यविद्या योजिता।

*वार्ता कामसूत्रं शिल्पशास्त्रं दण्डनीतिरिति पूर्वैः सहाष्टादश विद्यास्थानानि - इत्यपरे। आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः। दण्डनीतिरेवैका इत्यौशनसाः। धर्मभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते। वार्ता दण्डनीतिर्द्वे विद्ये इति बार्हस्पत्याः। वृत्तिर्विनयग्रहणं च स्थितिर्लोकयात्रायाः। त्रयी वार्ता दण्डनीतयस्तिस्रो विद्या इति मानवाः। त्रयी हि वार्तादण्डनीत्योरुपदेष्ट्री। आन्वीक्षिकीत्रयीवार्तादण्डनीतयश्चतस्रो विद्या इति कौटिल्यः। आन्वीक्षिक्या हि विवेचिता त्रयी वार्तादण्डनीत्योः प्रभवति। पञ्चमी साहित्यविद्येति यायावरीयः। सा हि वचसृणामपि विद्यानां निस्यन्दः । आभिर्द्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम् ।*

(काव्यमीमांसायाम्, द्वितीयाध्याये)

तथैव राजशेखरेण वेदैः साकमुपवेदानां, नाट्याख्यपञ्चमवेदस्य, षट्सु वेदाङ्गेषु अलङ्कारस्य सप्तम वेदाङ्गस्पि समावेशो व्यधायि।

*ऋचो यजूंषि सामानि चार्थर्वाणि त इमे चत्वारो वेदाः।*
*इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः।*
*वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो नाट्यवेद इति द्रौहिणिः। शिक्षा,*
*कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्यौतिषं च षडङ्गानि*
*इत्याचार्याः। उपकारकत्वादलङ्कारः सप्तमममङ्गम् इति*
*यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद् वेदार्थानवगतिः।*

शुक्रनीतौ द्वात्रिंशद् विद्याः परिकीर्तिताः। चतुष्षष्टिकलाः अन्याः इमाश्च द्वात्रिंशद्विद्याः अन्या इत्यपि शुक्रेण तत्र प्रत्यपादि। ताश्च विद्याः इमाः सन्ति -

*विद्या ह्यनन्तास्तु कलाः संख्यातुं नैव शक्यते।*
*विद्या मुख्यास्तु द्वात्रिंशत् चतुःषष्टिकलाः स्मृताः।।*
*यद्यत् स्यात् वाचिकं सम्यक् कर्म विद्याभिसंज्ञितम्।*
*शक्तो मूकोऽपि तत् कर्तुं कलासंज्ञं तु तत्स्मृतम्।।*
*विद्यानां कलानां च नामानि तु पृथक् पृथक्।।*
*ऋग्यजुः साम चाथर्व वेदा आयुर्धनुः क्रमात्।*
*गान्धर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्तिताः।।*

*शिक्षा व्याकरणं कल्पो निरुक्तं ज्योतिषं तथा।*
*छन्दः षडङ्गानीमानि वेदानां कीर्तितानि हि।।*
*मीमांसातर्कसांख्यानि वेदान्तो योग एव च।*
*इतिहासाः पुराणानि स्मृतयो नास्तिकं मतम्।।*
*अर्थशास्त्रं कामशास्त्रं तथा शिल्पमलङ्कृतिः।*
*काव्यानि देशभाषाऽवसरोक्तिः यावनं मतम्।*
*देशादिधर्मा द्वात्रिंशदेता विद्याभिसंज्ञिताः।।*

(शुक्रनीतौ, ४.२७६-३०५)

शुक्रस्य अस्मिन् विद्याविमर्शे अर्थशास्त्रं, कामशास्त्रं,शिल्पम्, अलङ्कृति, काव्यानि, देशभाषा, अवसरोक्तिः, यावनं मतम् देशादिधर्मा इति नव नवाः विद्याः विद्यापरिसंख्याने पदं लम्भिताः। अत्र अलङ्कृतिरिति नाम्ना या विद्या सूचिता सा अद्यतनैः सौन्दर्यशास्त्रमिति व्यपदिश्यते। तद्यथा अलङ्कृतिविद्याया लक्षणं शुक्रेण इत्थं विहितम्

*समन्यूनाधिकत्वेन सारूप्यादिप्रभेदतः।*
*अन्योन्यगुणभूषा तु वर्ण्यतेऽलङ्कृतिश्च सा।।*

अत्र समानुपातिकता, सारूप्यम्, अन्योन्यगुणेन भूषा इति यानि लक्षणानि वर्णितानि अलङ्कृतेस्तानि सन्दर्यशास्त्रस्यैव लक्षणानि। अथ यावनं मतमिति या विद्या शुक्रेण वर्णिता, सा कुरान-शरीफमाश्रित्य प्रवर्तितं इस्लामदर्शनं प्रतिभाति। यतो हि वेदानामप्रामाण्यं, एकस्य ईश्वरस्य स्वीकृतिश्च तस्य यावनमतस्य लक्षणं शुक्रेणाभाणि। एतच्च इस्लामदर्शन एव सङ्गच्छते।

इत्थं च त्रयी, चतुष्टयी वा विद्यानां चा पूर्वं पूर्वजैः प्रतिपादिता, सा परस्तात् चतुर्दशत्वं द्वात्रिंशत्त्वं वा प्रपेदे।

अथ पूर्वोक्तासु तिसृषु, चतसृषु, चतुर्दशसु, अन्ततश्च द्वात्रिंशत्स्वपि विद्यासु अनुवादस्य परिगणनं कथं न कृतमिति प्रश्न उदेति।

अत्रेदमुच्यते – द्वात्रिंशद्विद्यासु देशभाषाज्ञानमिति ऊनत्रिंशत्तमा विद्या शुक्रेणोक्ता। विभिन्नानां देशानां भाषासुप्रावीण्यमेव देशभाषाज्ञानम्। अनुवादकेन अनुवाद्यमानग्रन्थस्य भाषा अवश्यं ज्ञेया, यस्यां च भाषायां स ग्रन्थोऽनूद्यः सा त्ववश्यं तस्य विज्ञाता

स्यादेव। अत एव विद्यासु परिगणितस्य देशभाषाज्ञानस्यैव काचन परिणतिरस्ति अनुवादविद्येति वक्तुं युज्यते।

विद्याया अभिव्यक्तिः कर्मणि परिणतिर्वा कलेत्युच्यते। कश्चन जनोऽनुवादस्य शास्त्रं जानाति, अनुवादविद्यां विवेचयितुं शक्नोति, स एव यदा अनुवादकर्मणि प्रवृतस्तत्र पाटवं प्रकटीकरोति तदा तदीयं कर्म कला जायते। विद्यायां भवति ज्ञानं, कलायां तस्यैव ज्ञानस्य व्यवहारे प्रतिफलनं – कलाकारस्यात्मतृप्तिः, रसिकस्य सौन्दर्यानुभूतिर्वेति अनयोर्विवेकः। ज्ञानदृष्ट्या अनुवादो नाम विद्या, परिणतिदृष्ट्या च स एव कलेति वक्तुं शक्यते।

कलाविचारे चतुष्षष्टिकलानां परिसंख्यानं कामसूत्रादिषु विहितम्। तत्र वात्स्यायनप्रतिपादितासु अङ्गविद्यासु सप्तचत्वारिंशत्तमा वर्तते देशभाषाज्ञानम् इति। यथा अनुवादशास्त्रम् शुक्रेण प्रतिपादितायाः देशभाषाज्ञानविद्यायाः परिणतिः, तथैव अनुवादकला वात्स्यायनोक्ताया अस्याः कलाया विस्तारः।

आधुनिके काले तु संस्कृतभाषाद्वारेण नैके नवीना अध्ययनविषयाः प्रवर्तिताः। तथाहि पाश्चात्त्यप्राच्यविद्याविद्भिः मैक्समूलरप्रभृतिभिः संस्कृतं वेदांश्चाधीत्य तुलनात्मकं भाषाशास्त्रम्, तुलनात्मकं धर्मविज्ञानम्, तुलनात्मकं पुराकथाशास्त्रं चेति नवीनाः विषयाः विकासं नीताः। ततश्च विंशशतके तुलनात्मकं सौन्दर्यशास्त्रं सङ्गणकीयसंस्कृतं चेति विषययोरध्ययनमारब्धम्। अनुवादविद्या अनुवादकला वा देशभाषाज्ञानस्य अङ्गभूतत्वेन प्राचां मतेन स्वीक्रियेत कामम्, सम्प्रति तु स्वतन्त्रो नूतनश्च विषयो वर्तते अनुवादशास्त्रम्। अस्य विषयस्य महत्तां सम्प्रति कामपि काष्ठामधिरोहति। विदेशेषु अस्मद्देशे च अनुवादाध्ययनम् इति विषयस्य विभागाः नैकेषु विश्वविद्यालयेषु समारब्धाः सन्ति। यथा यथा विश्वम् एकग्रामतां याति तथा तथा विभिन्नेषु समाजेषु, नाना जातिषु नाना देशेषु वा परस्परं संवादाय अनुवादस्य आवश्यकता वर्धते, तथा तथा च अनुवादविषये विचारस्य आवश्यकताऽपि समधिकतरम् अनुभूयते।

अस्मिन् लघुनि प्रबन्धे अनुवादशास्त्रस्य अनुवादकलायाश्च सङ्क्षिप्य विवेचनं मया विहितम्। अनुवादसिद्धान्तानाम् अनुवादव्यवहाराणां च विमर्शोऽनुवादशास्त्रमित्यभिधातुं शक्यते। अत्र मया अनुवादसिद्धान्ताः अनुवादव्यवहाराश्च (Theory and Practice of Translation) विचारिताः। संस्कृतशास्त्रपरम्परायाम् अनुवादस्य किं स्वरूपं का च परम्परा अभवदिति परामृश्य सिद्धान्तव्यवहारयोः समन्वयोऽत्र विहितः। अनुवादव्यवहारे तु संस्कृते इतरभाषाणां वाङ्मयस्य अनुवादाः संस्कृतवाङ्मयस्येतरभाषास्वनुवादा विचारिताः, तैः शास्त्रस्य लक्षणानां परिष्कारदिक् च दिङ्मात्रं प्रदर्शिता।

इतो यावत् यदुक्तं तत् सङ्क्षिप्यानूद्यते –

**शास्त्राणामानन्त्यात् प्रस्थानानां नवानुसन्धानात्।**
**स्वीकर्तव्यं शास्त्रं नूतनमनुवादशास्त्रमिति।।**
**अनुवादो विद्या वा परिणतिदृष्ट्या कलाऽपि मन्तव्यः।**
**अक्षुण्णः किल महिमा सम्प्रति विश्वेऽस्य वर्तते नूनम्।।**

अस्य प्रबन्धस्य प्रारम्भिकं रूपम् अतीतेषु पञ्चसु वर्षेसु राष्ट्रियसंस्कृतसंस्थानान्तरवर्तिनि मुक्तस्वाध्यायपीठे समायोजितायाम् अनुवादकार्यशालायां मया प्रस्तुतम्। अनन्तरं चायं निबन्धरूपेण विदुष्याः लीनारस्तोगीमहोदयायाः अभिनन्दनग्रन्थे प्रकाश्यतामाप। हर्षस्यायं विषयो यदयं प्रबन्धः सम्प्रति विस्तारं गमितः नवीनैर्विषयैरुपोद्बलितः कालिदाससंस्कृतविश्वविद्यालयेन प्राकाश्यं नीयते। एतदर्थं विश्वविद्यालयस्य सुयोग्येभ्यः कुलपतिभ्यः श्रीनिवासवरखेडीमहोदयेभ्यः धन्यवादानर्पयामि। एतस्य प्रकाशनेन अनुवादविषये नवीनचिन्तने अनुवादकरणे च प्रवृत्तिरग्रेसरा स्यादिति आशासे।

राधावल्लभः त्रिपाठी

# अनुक्रमः

# अनुवादशास्त्रे सूत्राणि

अथातोऽनुवादजिज्ञासा। (१.१)

रूपान्तरमनुवादः।। (१.२)

स्रष्टा च भोक्ता चेति द्वावस्याधिकारिणौ। (२.१)

अनुवादविद्याऽनुवादकला चास्य विषयः। (२.२)

विहितस्य पुनःकथनमनुवाद इति प्राचीनाः। (३.१)

स चानुवादःशब्दानुवादोऽर्थानुवादश्चेति द्विविधः। (३.२)

भाष्य-समीक्षा-चूर्णिका-वार्तिक-टीका-पञ्जिका-सारसङ्ग्रह-सङ्ग्रहा अनुवादपर्यायाः। (४.१)

प्रतिरूप-च्छाया-संवाद- प्रतिबिम्बाभासाश्चाप्यनुवादपर्यायाः। (५.१)

प्रयोजनं तस्य द्विविधम्। (६.१)

वाङ्मयद्वैविध्यात् प्रयोजनद्वैविध्यम्। (६.२)

द्विविधश्चायम्, काव्यानुवादशास्त्रानुवादभेदात्।। (६.३)

व्यावहारिकप्रातिभासिकपारमार्थिकानामनुवादानां प्रसङ्ग-देश-कालाद्यानुरोधेन नानात्वम्। (७.२)

# अनुवादशास्त्रे परिकरश्लोकाः

भूमिकायाम्
शास्त्राणामानन्त्यात् प्रस्थानानां नवानुसन्धानात्।
स्वीकर्तव्यं शास्त्रं नूतनमनुवादशास्त्रमिति।।
अनुवादो विद्या वा परिणतिदृष्ट्या कलाऽपि मन्तव्यः।
अक्षुण्णः किल महिमा सम्प्रति विश्वेऽस्य वर्तते नूनम्।।

(१)

अनुवादः पुनः सृष्टिः कस्याश्चित् कृतिनः कृतेः।
स मूलरचनायाः स्यात् प्रतिरूपं नवं क्वचित्।।१।।
बिम्बभूताऽथवा तस्मिन् रचना प्रतिबिम्बति।
आभासोऽपि तथा तस्याः अनुवादे प्रजायते।।२।।
संवादं चापि कुर्वाणा मूलग्रन्थेन जातुचित्।
तस्यैवादितान् पक्षानुद्धाटयेदनूदितम्।। ३।।

(२)

अनुवादमये विश्वे दाता स्यादनुवादकः।
गृहीता रसिको वाऽपि जिज्ञासुः शास्त्रकोविदः।।४।।
अत्र दातागृहीता च तावुभावधिकारिणौ।
तयोः शास्त्रेण सम्बन्धो मूलेनानूदितेन च।।५।।
सम्बन्धत्रितयी तेन वा सम्बन्धचतुष्टयी।
प्रवृत्तिश्चानुवादेषु शास्त्रस्यास्य प्रयोजनम्।।६।।

३

पुनरावृत्तिमात्रं स्यादनुवादस्तु सर्वथा।
प्राचीनानां मते सोऽयं नव्येष्वर्थान्तरं गतः।।७।।

५

ईश्वरस्य यथासृष्टिः तत्त्वतः पारमार्थिकी।
प्रतिरूपं तथाऽऽभासास्तस्याः वै पारमार्थिकाः।।८।।
सत्ता वास्तविकी तद्वत् रचनायाः कस्यचित् कवेः।
अनुवादः कृतस्तस्यास्तथा वास्तविको भवेत्।।९।।



६

विश्वसंस्कृतिनिर्माणम् संवादश्च परस्परम्।
नानाभाषासु काव्येषु समाजेषु जनेष्वपि।।
नानाराष्ट्रसमाजानां ज्ञानं सौहार्दभावना।
व्यक्तेर्मुक्तिः समाजस्य मुक्तिर्विश्वस्य चापि वै।।
विलुप्तानां क्वचिन्मूलग्रन्थानां कालभेदतः।
तथा च पुनरुद्धारो विशेषज्ञैः प्रयत्नतः।।
अनुवादेन साध्येत सर्वमेतत् प्रयोजनम्।
यज्ञेन तपसा कर्म चानुवादस्य स्यात् समम्।।

७

मूलं काव्यं पुष्पं परिमलसदृशा भवन्त्यनुवादाश्च।
साहित्यस्योद्याने रसिकभ्रमराः सदा तृप्ताः।।
महिमानं ते प्रापुस्त्वनुवादैः किल च कालिदासाद्याः।
विश्वव्याप्तां कीर्तिं राष्ट्रे पुनरपि च गौरवम्।।
रवीन्द्रनाथो यदि नाकरिष्यत्
गीताञ्जलेराङ्ग्लगिरानुवादम्।
कवीन्द्र इत्यस्य तु नाभविष्यत्
समस्तसंसारगता प्रतिष्ठा।।
साहित्ये ललिते यथैव प्रसरन् शास्त्रेऽपि तर्कान्विते
विश्वज्ञानविकासनेऽतिमहतीं नूनं वहन् भूमिकाम्।
भाषाभिः सकलाभिरेव निविशन् भाषासु सर्वासु यः
यत्सत्यं ह्यनुवादकर्म सुतरां विश्वस्य सम्प्रीणनम्।।

९

आधानोद्धरणे यावद् यावद् दोलायते मनः।
तावदेवानुवादस्य प्रक्रिया शिथिलायते।।
यत्नतः प्रत्यभिज्ञेयं मूलग्रन्थे पदम् पदम्।
पदे पदेऽन्यथा स्याद्धै स्खलनं तु मुहुर्मुहुः।।
मूलभाषापदानां च ज्ञात्वा मर्म यथाविधि।
स्वभाषायां च भवेत् तेषां पर्याया अपि कीदृशाः।।
पदस्य स्थापिते स्थैर्येऽनुवादो याति पूर्णताम्।
परिपूर्णेऽनुवादे स्यान्ननु सिद्धा सरस्वती।

# प्रथमोऽध्यायः
## अनुवादशास्त्रस्य स्वरूपम्

### अथातोऽनुवादजिज्ञासा। (१.१)

अथेत्यानन्तर्ये। भूमिकायां भारतीयशास्त्रपरम्परा विचारिता। तत्र कथं विद्यानां परिबृंहणं शास्त्राणां च परिवर्धनं जातमिति प्रतिपादितम्। तत्रैव अनुवादशास्त्रमिति शास्त्रं नवीनं सदपि न परम्पराबाह्यमित्यपि प्रत्यपादि। यद्यपि सम्प्रति नाना देशेषु तासु तासु भाषासु न केवलं वरीवर्धतेऽनुवादपरम्पराऽपितु अनुवादस्य सिद्धान्तानधिकृत्यापि चर्चा जायत इत्यप्यवोचाम। तथापि अनुवादस्य लक्षणं अनुवादशास्त्रस्य च स्वरूपं नास्माकं शास्त्रपरम्परायां विचरितमिति तदर्थमयं यत्नः।

किं नामानुवादशास्त्रम्? अनुवादस्य शंसनं लक्षणादिनिरूपणं शासनं नियमनं च यत् विदधाति तदनुवादशास्त्रम्।

को नामानुवादः? अनुपश्चाद् कथनमनुवादः। तत्कृते मूलरचनायाः कस्याश्चिन्नियतपूर्वभावित्वमनिवार्यम्। अनुवादः सदैव परवर्ती भवति, मूलरचना च भवति पूर्ववर्तिनी, अनुवादश्च तां विषयीकुरुते। अतश्च कस्यचित् वाक्यस्य वाक्यकदम्बकस्य वा विषयीकरणनुवाद इति लक्षणं कर्तुं शक्यते। परन्त्वत्र टीका-व्याख्या-समीक्षादिष्वतिव्याप्तिर्भवति। अनु पश्चाद् कथनमनुवाद इत्येव लक्षणं तर्ह्यास्तामिति चेन्न। न्यायदर्शनसम्मतानुवादे अन्वय-पदपाठ-जटापाठ-घनपाठादिष्वतिव्याप्तेः।

वस्तुतः समस्तं वाङ्मयं परमात्मना यत् कृतं कथितं वा तस्य अनुकरणं अनुवचनं छाया वा वर्तते। परमात्मना यत्किमपि कथितपूर्वं तस्यैव अनुकीर्तनं वयं कुर्मः, परमात्मना यत् विश्वं रचितं तस्य नानाविधकलाकृतिषु अनुकरणं वयं कुर्मः। अत एव मानवानां समस्तं कृतित्वमेव अनुवादः। प्रत्येकं परवर्तिनी साहित्यरचना ईश्वरनिर्मितस्यास्य जगतः पदार्थानां पूर्ववर्तिनीनां रचनानां वा

छायाभिर्विनिर्मीयते, अत एव सर्वमेव साहित्यमनुवादरूपमेव। अनु पश्चात् करणेन कथनेन वा तस्मिन् सौन्दर्यं विच्छित्तिविशेषरम्यता वा आविर्भवति। पाश्चात्त्यविचारकेषु टी.एस. इलियट् अमुमेव आशयं समर्थयति।[1]

आधुनिकदृष्ट्या तु एकस्याः भाषाया उक्तस्य लिखितस्य वा पाठस्य अपरस्यां भाषायां स्थानान्तरणम् अनुवादः।[2] अनया दृशा अनुवादे द्वयोः भाषयोर्दातृगृहीतृसम्बन्धो भवति। प्रथमा भाषा स्रोतः, द्वितीया तत्स्रोतसा उपकृता। दातृभाषायाः सामग्री यथाशक्ति अविकलमविकृतं च गृहीतृभाषायां प्रस्तूयते, तच्च प्रस्तुतीकरणम् स एवानुवादः।[3] एतेन प्रथमभाषाया उत्तमर्णत्वं श्रेयस्त्वं च द्वितीयभाषायाश्चाधमर्णत्वं हेयत्वं वाऽपि ज्ञाप्यते। तदेतद् दातृगृहीतृसम्बन्धं दातृभाषाया उत्तमर्णत्वं गृहीतृभाषाया अधमर्णत्वं च पूर्णतो नाङ्गीकुर्मः।

वैवाहिके सम्बन्धे कन्यापक्षः प्रदाता, वरपक्षश्च भवति गृहीता। अनयोः दातृत्वात् कन्यापक्षो वरीयान्, गृहीतृत्वाद् वरपक्षो लघीयानिति वक्तुं न शक्यते। उभयोः सर्वथा समानत्वे सम्बोभवति दाम्पत्यमङ्गलम्। एवं च घटितमनूद्यमानानूदितयोः साहित्यं कस्य न

---

[1] "If we approach a poet without this prejudice, we shall often find that not only the best, but the most individual parts of his work may be those in which dead poets, his ancestors, assert their immortality most vigorously……..No poet, no artist of any art has his complete meaning alone. His significance, his appreciation is the appreciation of his relation to the dead poets and artists. You cannot value him alone; you must set him for contrast amongst the dead. I mean this as a principle of aesthetic, not merely historical criticism. The necessity that he shall confirm that he shall cohere, is not one sided, what happens when a new work of art is created is something that happens simultaneously to all works of art which precede it. The existing monuments form an ideal order among themselves which is modified by the introduction of the new (the really new) work of art among them." (Tradition and Individual Talent, T.S. Eliot, 1915, p.14-15).

[2] Translation is 'the replacement of a textual material in one language by equivalent textual material in another language' ( Catford, J.C., 1965, A Linguistic Theory of Translation)

[3] 'Translation consists in producing in receptor language the closest, natural equivalent to the message of source language, first in meaning and secondly in style (Nida, E.A., 1964, Towards Science of Translation)

भवति प्रियम्। यथोक्तं शब्दब्रह्मविदा परिणतप्रज्ञेन महाकविना भवभूतिना –

**जनकानां रघूणां च सम्बन्धः कस्य न प्रियः।**
**यत्र दाता गृहीता च स्वयं कुशिकनन्दनः।।**

अन्यच्च - यथा नियतिकृतनियमबद्धाया सुखदुःखमोहैकस्वभावायाः उपादानादिकारण- परतन्त्राया न सर्वथा हृद्याया ईश्वरकृतसृष्टेः तदनुवादभूताऽपि कविसृष्टिः तस्या विशिष्यते, तथैव कस्याश्चिद् भाषयाः कापि कृतिः अपरस्यां भाषायामनूदिता मूलकृतेरपि क्वचित् समधिकतरं गुणवती जायते। अपरं च - यथा मूलकृतेः कवयितरि केवलं कारयित्री प्रतिभा अपेक्ष्यते, काव्यरचनानाम् अनुवादकेषु तु कारयितृभावयितृप्रतिभयोः उभयोरपि प्रकृष्टः समागम आवश्यक इति भवति अनुवादकस्य किमपि अनतिसाधारणं माहात्म्यम्, अत एवासौ केवलमधमर्णः सन् शुक इव अपरस्य वचसां रटनं कुरुते इति मतं न सुश्लिष्टम्। तेन अनुवादस्य साकल्येनेत्थं भवति लक्षणम्-

**रूपान्तरमनुवादः।। (१.२)**

कीदृशस्तर्हि मूलग्रन्थकारस्य अनुवादकस्य च सम्बन्धः? अनयोर्मध्ये गुरुशिष्ययोरिव नदीतत्कुल्ययोरिव वा सम्बन्धः। अथ परस्परं जन्यजनकभाव उपकार्योपकारकभावोऽपि अनयोर्मन्तव्यः। तत्र प्रथमा कृतिः अनूदितां द्वितीयां कृतिं जनयति चोपकरोति च इत्येव न मन्तव्यम्। द्वितीया अनूदिता कृतिरपि प्रथमां मूलरचनामुपकरोति पुष्णाति विशेषयति च।

ननु भवतैवोक्तम् - अनयोर्मध्ये गुरुशिष्ययोरिव नदीतत्कुल्ययोरिव वा सम्बन्ध इति। कथं तर्हि न मन्यते प्रथमस्य ज्यायस्त्वमपरस्य च कनीयस्त्वम्।

अत्रोच्यते - गुरुः न केवलं दाता, न च शिष्यः केवलं गृहीता, सुयोग्यः शिष्यः गुरूपदेशे विशिष्टं किमपि स्वकीयं संयोज्य क्वचित् प्रत्युपदेशं विधत्ते। तद्यथा कालिदासस्य मालविकाग्निमित्रे नाट्यगुरुः स्वशिष्यामधिकृत्य न्यगादीत् –

**यद्यत् प्रयोगविषये मया भाविकमुपदिश्यते तस्यै।**
**तत् तद्विशेषकरणात् प्रत्युपदिशतीव मां बाला।।**

यथा शिष्यः विशेषकरणेन गुरवे प्रत्युपदेशं विधत्ते, यथा वा नद्या विनिःसृता कुल्या विविधग्रामनगरक्षेत्राणि सिञ्चन्ती तदीयप्रवाहं लोकोपकाराय प्रसारयति, तथैव अनुवादो मूलकृतिमनुहरन्नपि तस्यां विशेषं कमपि संयोज्य तां प्रत्युपकरोति, तां लोके प्रसारयति, तन्माहात्म्यं च प्रगुणीकरोति। इत्थं च अन्तरा मूलरचनां तदनुवादं च रूपप्रतिरूपसम्बन्धः, संवाद्यसंवादसम्बन्धः, बिम्बप्रतिबिम्बसम्बन्ध आभास्याभाससम्बन्धो वा स्यात्। भवन्ति चात्र श्लोकाः

**अनुवादः पुनः सृष्टिः कस्याश्चित् कृतिनः कृतेः।**
**स मूलरचनायाः स्यात् प्रतिरूपं नवं क्वचित्।।१।।**
**बिम्बभूताऽथवा तस्मिन् रचना प्रतिबिम्बति।**
**आभासोऽपि तथा तस्याः अनुवादे प्रजायते।।२।।**
**संवादं चापि कुर्वाणा मूलग्रन्थेन जातुचित्।**
**तस्यैवादितान् पक्षानुद्घाटयेदनूदितम्।। ३।।**

**इति प्रथमोऽध्यायः**

# द्वितीयोऽध्यायः

## अनुवादशास्त्रस्यस्यानुबन्धचतुष्टयम्

अस्ति तावदनुवादशास्त्रस्य वाङ्मयविश्वे अनतिसाधारणं महत्त्वम्। यथा प्रत्येकं शास्त्रस्य भवत्येवानुबन्धचतुष्टयम्, तथाऽस्यापि। अनुबन्धचतुष्टयं नाम अधिकारिविषयसम्बन्धप्रयोजनानि। तत्रेदं सूत्रम् –

**स्रष्टा च भोक्ता चेति द्वावस्याधिकारिणौ। (२.१)**

तत्र अनुवादचिकीर्षवस्तावत् स्रष्टारः, अनुवादपाठकाश्च भोक्तारः। उभयेषामत्राधिकारः।

इह तावत् शास्त्रस्य द्विविधं लक्षणम् – शंसनाच्छास्त्रं शासनाच्छास्त्रमिति च। येषां कृते अस्य शास्त्रस्य शंसनं ये चानेन शास्त्रेण शासनीयास्त एवास्याधिकारिणः। अनुवादं चिकीर्षूणां पिपठिषूणां कृते एतस्य शास्त्रस्य शंसनं क्रियते, त एव चानेन शास्यन्त इति त एवास्याधिकारिणः। तानेतत् शास्त्रमुपकरोति। ननु अनुवादकर्मणि प्रवृत्तस्य कृते भवतु नाम शास्त्रस्यास्य शंसनम्, स एव च भवतु अनेन शासनीयो वा। पाठकस्य तु नानेन किमपि उपक्रियते, अनूदितस्य साहित्यस्यानुशीलनं अध्ययनं वा तेन करणीयं, तत् अनुवादशास्त्रज्ञानं विनैव सुशकम्। यथा सङ्गीतशास्त्रानभिज्ञोऽपि उत्तमस्य गानस्य वीणादिवादनस्य च आस्वादं प्राप्तुमर्हति, यथा वाऽनधीतालङ्कारशास्त्रोऽपि काव्यारसास्वादं वा कुरुते, तथैवानधीतानुवादशास्त्रः अनूदितस्य ग्रन्थस्य स्वारस्यं जानीयात्। इति।

नैतत्। यथा अनुवादकर्मणि प्रवृत्तः स्रष्टा यथा अनुवादशास्त्रमधीयान उत्कृष्टस्य अनुवादस्य लक्षणं स्वरूपं वा विज्ञाय, अनुवादस्य तांस्तान् प्रकारान् वा ज्ञात्वा कीदृशोऽनुवादो मया करणीयः कथं च स्वानुवादस्य समीचीनतां साधयामीति विज्ञाय सफलयति आत्मनोऽनुवादसाधनाम्, तथैव अनुवादस्य पाठकोऽपि

अनुवादशास्त्रस्याध्ययनेन अनुवादकलाया मानदण्डान् विदित्वा अनुवादोऽयं उत्तमो वा न वेति वेत्तुमर्हति। अथ च पठितस्यानुवादस्य मीमांसाकरणे प्रभवति, तेन च कस्याश्चनाप्यनूदितायाः रचनायाः समीक्षणे भवत्यस्याधिकारः। अतो युक्तमुक्तम्- स्रष्टा च भोक्ता चेति उभावपि अनुवादशास्त्रस्याधिकारिणाविति।

अनुवादो नाम काचन विद्या कला वाऽपीति प्रागवोचाम। सा विद्या कला चास्य शास्त्रस्य विषयः। अतश्च सूत्रम् –

**अनुवादविद्याऽनुवादकला चास्य विषयः। (२.२)**

अथ सम्बन्धो विचार्यते। अनुवादशास्त्रे मूलकृतिः, तस्या अनुवादः अनुवादकः अनुवादपाठकश्चेति चत्वारः पक्षा विचार्या भवन्ति। एतेषां परस्परं सम्बन्ध एवात्र सम्बन्धः। तेन सम्बन्धचतुष्टयी अत्र सिध्यति। साकल्येन सम्बन्धोत्र त्रिविधः – कर्तृनिष्ठो भोक्तृनिष्ठो विषयनिष्ठश्च। कर्ता त्वनुवादकः। तस्य अनूद्यमानया रचनया अनूदितया रचना वा सम्बन्धः कर्तृनिष्ठः सम्बन्धः। स तु अनुवाद्यानुवादकसम्बन्धः, अनूदितानुवादकसम्बन्धश्चेति द्विविधः। भोक्ता तु पाठकः, श्रोता वा। तस्य अनूदिते ग्रन्थे रुचिर्वर्तते, कौतुकवशाद्वा तद्ग्रन्थं तत्साहित्यं वा पिपठिषति, सुश्रूषते वा, इति अनूदितेन साहित्येन तस्य जिज्ञास्यजिज्ञासुभावसम्बन्धः, भाव्यभावकभावसम्बन्धो वा वर्तते। विषयनिष्ठः सम्बन्धश्च मूलकृतिं अनूदितकृतिं चान्तरा संवादः, अनूद्यानूदितभावः प्रतिपाद्यप्रतिपादकभावो वा।

तत्रापि अनुवादकःपाठक-मूलरचनाभेदेन भवन्ति सम्बन्धस्य अवान्तरा भेदाः। तेन सम्बन्धदृशा अनुवादक-पाठक-रचनानां त्रितयी चतुष्टयी वा जायते।

प्रयोजनं चास्यानुवादशास्त्रस्य अनुवादस्य स्वरूपं तत्त्वं रहस्यं चावबुध्य तस्य करणे अवगमे च अप्रतिहता गतिः। इति अनुबन्धचतुष्टयनिरूपणम्। भवति चात्रश्लोकः

**अनुवादमये विश्वे दाता स्यादनुवादकः।**
**गृहीता रसिको वाऽपि जिज्ञासुः शास्त्रकोविदः।।४।।**
**अत्र दातागृहीता च तावुभावधिकारिणौ।**

तयोः शास्त्रेण सम्बन्धो मूलेनानूदितेन च।।५।।
सम्बन्धत्रितयी तेन वा सम्बन्धचतुष्टयी।
प्रवृत्तिश्चानुवादेषु शास्त्रस्यास्य प्रयोजनम्।।६।।

इति द्वितीयोऽध्यायः

# अथ तृतीयोऽध्यायः
## शास्त्रेषु अनुवादस्वरूपम्

अनुवादशब्दोऽयं संस्कृतपरम्परासु न सर्वथा तमेवार्थं व्यनक्ति यस्मिन् अर्थे सम्प्रति प्रयुज्यते, यस्मिंश्चार्थे प्रकृतेऽस्मिन् व्याख्याने अस्माभिरयं शब्दः प्रायोजि। परम्परायां मूलकृतेस्तदनुवादस्य च आशयाभिव्यक्तये प्रतिरूपम्[4], छाया, प्रतिबिम्बः, आभासश्चेत्यादयः शब्दा उपादीयन्ते। संस्कृतपरम्परायामनुवादशब्दस्य कोऽर्थ इति विचार्यते। संस्कृतशास्त्रपरम्परायां तु अनुवादो नाम एकेन कथितस्य वाक्यस्य तेनैव अन्येन वा अनुकथनम् आवृत्तिर्वा। तद्यथाऽऽह (न्यायसूत्रे २.१.६६) गौतमः – विहितस्यानुवचनमनुवाद इति। वृत्तिकारश्च व्याख्याति -

प्राप्तस्यानु पश्चात् कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम्। सूत्रे चात्र –

**विहितस्य पुनःकथनमनुवाद इति प्राचीनाः। (३.१)**

**स चानुवादःशब्दानुवादोऽर्थानुवादश्चेति द्विविधः। (३.२)**

एतेन अनुवादस्य द्वौ पक्षौ सूच्येते – विध्यनुवचनं विहितानुवचनं च। विध्यनुवचनं नाम शब्दानुवादः. अस्मिन् अभ्यासः आवृत्तिमात्रं वा भवति। विहितानुवचनं तु अर्थानुवादः। विहितानुवचने स्तुतिनिन्दात्मकः विधीयमानो वाऽर्थो बोध्यते। भाष्यकारेण तु विधिरर्थवादोऽनुवाद इति वाक्यं त्रिधा विभज्य अनुवाद इत्थमुदाहृतः – "अनुवादः - पचतु पचतु भवानित्यभ्यासः। क्षिप्रं पच्यतामिति वा। अङ्ग पच्यतामित्यध्येषणार्थम्, पच्यतामेवेति वावधारणार्थम्।"[5] अनया दृशा अनुवादपुनरुक्तयोः सर्वथा अविशेषः

---

[4] ऋग्वेदे I.47.18; VI.47.18 शतपथब्राह्मणे I.5.8

[5] न्यायसूत्रे 2.1.66 इत्यत्र वात्स्यायनभाष्यम्, सं. गंगानाथ झा, ढुंढिराज शास्त्री, वाराणसी, 1925, पृ 339

अभेदो वा प्रत्यपीददन्न्यायसूत्रकारः। तथा चोक्तम् - "नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः।" इति (तत्रैव, २.१.६७) तथा च "शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेष" इति च (तत्रैव, २.१.६८)।

सिद्धान्तचन्द्रिकायां (३३) तु प्रमाणान्तरेणावधृतस्यार्थस्य प्रतिपादकोऽनुवाद इति लक्षणं विहितम्। अन्यत्र भूतार्थानुवादः, स्तुत्यार्थानुवादः गुणानुवादश्चेति त्रिधाऽनुवादो निरूपितः। जैमिनिन्यायमालायां (१.४.६) ज्ञातस्य कथनमनुवादः प्रोक्तः।[6] निष्कृष्टार्थस्तु – अनुवादकत्वं नाम "गृहीतग्राह्यनुभवमत्रजनकत्वम्। स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्ति-स्वसमानाकार-निश्चयविषयविषयकतद्विष्येष्यकतत्प्रकारानुभवमात्रजनकत्वमिति यावत्। अत्र स्वपदमनुभवादिपरम्" इति।[7] कालिदासेनाप्युक्तम्-

अयमपि च गिरं नस्त्वद्प्रबोधप्रयुक्ता-
अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः (रघुवंशे,५.७४)।

अत्र शुका यथाश्रुतं पुनः कथयन्ति, तेषां यत् मनुष्येण कथितस्य पुनरुच्चारणं तदेवानुवादः। ध्वनिकारस्तु-

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः सोऽन्यैः ततो नेह प्रतन्यते।। (ध्वन्यालोके, १.३)

इति कारिकायाः व्याख्याने न्यगादीत् - केवलमनूद्यते पुनर्यथायोगम्...इति। अभिनवगुप्तस्तु अस्य व्याख्याने विशेषप्रतिषेधेन शेषाभ्यनुज्ञात्मकमनुवदनमिति व्याख्यातवान्। इत्थं चाङ्ग्लभाषायां ट्रांसलेशन इति शब्दस्यार्थात् शास्त्रपरम्परायाम् अनुवादपदस्य अर्थो भिन्नः। सत्यप्युभयोर्भेदे अत्र ट्रांसलेशनपदार्थेऽनुवादशब्दोऽस्माभिः प्रायोजि, तस्य लोकव्यवहारप्रचलितत्वात्। प्राचीनानां मते अनुवादो नाम पूर्वं

---

[6] न्यायकोशे, पृ. 33-34
[7] तत्रैव, पृ. 34

कथितस्य अनुवचनम्, अनुवादशास्त्रेऽस्मिन् अनुवादपदं पारम्परिकमिममर्थं त्यक्त्वा नवीनमेवार्थं सङ्गृह्णाति।
भवति चात्र श्लोकः

**पुनरावृत्तिमात्रं स्यादनुवादस्तु सर्वथा।**
**प्राचीनानां मते सोऽयं नव्येष्वर्थान्तरं गतः।।७।।**

**इति तृतीयोऽध्यायः**

# अथ चतुर्थोऽध्यायः
## व्याख्यापरम्परायामनुवादस्य तत्त्वानि

प्राचीना अनुवादशब्दं भिन्नार्थे योजयन्तीति प्रागुक्तम्। आधुनिकेऽर्थे योऽनुवादस्तस्य कृते विशिष्टा शब्दावली संस्कृतशास्त्रपरम्परायां वर्तते। तदेवासूत्र्यते --

**भाष्य-समीक्षा-चूर्णिका-वार्तिक-टीका-पञ्जिका-सारसङ्ग्रह-सङ्ग्रहा अनुवादपर्यायाः। (४.१)**

भाष्य-समीक्षा-चूर्णिका-वार्तिक-टीका-पञ्जिका-सारसङ्ग्रह-सङ्ग्रहादिष्वपि आधुनिका यमनुवादमिति आमनन्ति तस्य तत्त्वानि लसन्ति। बौद्धसंस्कृतग्रन्थानां याष्टीका भोटभाषायां प्राचीनकाले विरचिताः तासु प्रतिपदमविकलं तथाऽनुवादो विहितः येन मूलग्रन्थे विलुप्ते सति केवलं टीकाया मूलग्रन्थस्य पुनरुद्धारः कर्तुं शक्यः। राहुलसांकृत्यायनादिभिर्विपश्चिपश्चिमैः नैकेषां विलुप्तानां संस्कृतग्रन्थानां भोट-सिंहली-प्रभृतिभाषासु तेषां ग्रन्थानां समुपलब्धाभ्यष्टीकाभ्यः पुनरुद्धारः कृतः। धर्मकीर्तेः वादन्यायः संस्कृते विलुप्तः भोटभाषायां तस्य या टीका प्राप्ता तस्याः अविकलं प्रतिपदं तस्य संस्कृतः पाठः महापण्डितेन राहुलसांकृत्यायनेन समायोजि। एवमेव सिंहलमहाकवेः कुमारदासस्य जानकीहरणं महाकाव्यं संस्कृते विलुप्तं सिंहलभाषाटीकायाः पुनःसंरचितम्। अत एव इमाष्टीका वस्तुतः पदच्छेदपुर्वकम् अनुवादमपि कुर्वन्ति येन मूलग्रन्थोऽविकलं विज्ञायेत।

भाष्य-समीक्षा-चूर्णिका-वार्तिक-टीका-पञ्जिका-सारसङ्ग्रह-सङ्ग्रहादीनां स्वरूपमाचार्यैः सुपरिभाषितमेव। तद्यथा राजशेखरस्तु काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे द्वितीयेऽध्याये शास्त्रनिर्देशसंज्ञके शास्त्रभेदान्निरूपयन् नानाशास्त्रकोटीरित्थं प्रत्यपीपदत् -

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः।।**

सूत्राणां सकलसारविवरणं वृत्तिः।
सूत्रवृत्तिविवेचनं पद्धतिः।
आक्षिप्य भाषणाद्भाष्यम्।
अन्तर्भाष्यं समीक्षा।
अवान्तरार्थविच्छेदश्च सा।
यथासम्भवमर्थस्य टीकनं टीका।
विषमपदभञ्जिका पञ्जिका।
अर्थप्रदर्शकारिका कारिका।
उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमिति शास्त्रभेदाः।

## इति चतुर्थोऽध्यायः

# अथ पञ्चमोऽध्यायः
## अनुवादपर्यायाः

यदि नाम अनुवाद इति शब्दो न मूलतोऽस्मत्परम्परायां ट्रांसलेशनपदार्थं व्यनक्ति, तर्हि परम्परायां ट्रांसलेशनपदार्थद्योतकाः शब्दाः के सन्ति इति प्रश्न उदेति। सन्ति अस्मच्छास्त्रपरम्परायामनुवादस्य अभिप्रायमंशतः स्पृशन्तः सर्वतोभावेन द्योतयन्तो नैके पारिभाषिकाः शब्दाः। अत्रेदं सूत्रम्
**प्रतिरूप-च्छाया-संवाद- प्रतिबिम्बाभासाश्चाप्यनुवादपर्यायाः। (५.१)**
**अनुवादः, छाया, संवादश्च**
साहित्यशास्त्रकारैः काव्येषु संवादः छायालङ्कारश्च निरूपितौ। उभयोरपि अनुवादप्रक्रिया अन्तर्भवति।
छायालङ्कारस्तु अस्मदभिनवकाव्यालङ्कारसूत्रे इत्थं निरूपितः
*अथ छाया-*

*जीवनगतसौन्दर्यस्य प्रतिबिम्बीकरणं सङ्ग्रहः तदन्यथाकरणं च च्छाया।।२।६।३।।*

*"जीवनस्य उपरि निरूपितस्य आधिभौतिकाधिकदैविकाध्यात्मिकजगतां सकलसमुल्लासभूतस्य प्रतिबिम्बकल्पः सङ्ग्रहस्तदनु अन्यथाकरणमन्यरूपोपपादनं छाया। यथा कुशलश्छायाचित्रग्राहकः छायाचित्रयन्त्रेण न केवलं रमणीयदृश्यानां छविं सङ्गृह्णाति परन्तु स्वप्रतिभया छविसङ्ग्रहे पुनर्विन्यासमपि विधत्ते। अत एव छायाचित्रयन्त्रेण दृश्यविशेषनिरूपणमपि न भवति अनन्यथाकृतम्, तत्रापि अन्यथाकरणस्य वैशिष्ट्यं तु विजृम्भत एव।*

*"का कथा पुन: काव्यस्य यत्र कविप्रतिभा यथादृष्टस्य जगतश्छविं निरूपयन्ती तत्र कल्पनायास्तूलिका नवीनवर्णैस्तच्चित्रमुन्मीलयति। यदवोचाम प्रथमाधिकरणस्य प्रथमाध्याये-*

*साहित्ये जीवनं सर्वं सर्वाङ्गीणं नवं नवम्।*

*प्रतिबिम्बत्वमायाति समुल्लसति वर्धते।।*

*अद्भुत: प्रतिबिम्बोऽयं बिम्बमेव विभावयन्।*

*संस्कुर्वन् जीवनं तस्मिन् समवेतो नवायते।।*

*"राजशेखरस्तु अन्ययोनि-निह्नुतयोनि-योनीति त्रिधा विभक्तवान् काव्यार्थम्। तत्रान्ययोनिद्विविधाप्रतिबिम्बकल्प आलेख्यप्रख्यश्च। निह्नुतयोनिरपि द्विविध:- तुल्यदेहितुल्य: परपुरप्रवेशसदृशश्च। इत्थं राजशेखरेण आनन्दवर्धननिरुपिते प्रकारत्रये परपुरप्रवेशसदृशस्याऽर्थस्य चतुर्थो भेदो योजित:। यथाऽन्यस्मिन् नगरे प्रविशन् कश्चन नरस्तस्मिन् नगरे नानादृश्यानि निरूपयति, यथा वा कश्चन योगी स्वकीयं जीवात्मानमकस्माद् देहान्निस्सार्य अन्यस्मिन् देहे सङ्क्रामयति, स्वयं चाऽविकृतस्तिष्ठति, एवमेव महाकवि: पूर्ववर्तिकाव्येषु प्रविशति आदत्ते च तेभ्य: सामग्रीम्, परन्तु न तत्प्रभावेण विकृतिमापद्यते। एतदेवादानमन्यच्छायेति कथितं पूर्णसरस्वतिना मेघदूतस्य विद्युल्लताटीकायाम्।*

*"कस्यचिन्महाकवे रचनां पाठं पाठं न केवलं वयं तस्यैव कृतिं पठाम:, अपि तु ता अपि कृती: पठामो यासां छायास्तदीयायां कृतौ सङ्क्रान्ता इत्यभिप्रैति महाकविरिलियट:। तेन पूर्ववर्तिकाव्यानि पुनराटीकितानि जायन्ते, तेषां व्याख्या नवायते नवीनकविना विहितयाऽन्यच्छायया। एतेन जायते साहित्यपरम्पराया अतिप्राचीनाया: सातत्यम्। महाकवि: पूर्ववर्तिनामभिव्यक्तीर्नवीनानुसन्धानैरन्यदेव रूपं गमयति।*

"इत्थं छायालङ्कारे आदानमन्यथाकरणं चेति भवति पक्षद्वयम्। एतच्च पक्षद्वयं परस्परेण संसक्तम्, एकस्यैव नाणकस्य पार्श्वयोरिव। यथा उपनिषत्प्रोक्ते परापरे विद्ये युगपद् भवतः, तथैव काव्यरचनाप्रक्रियायामपि आदाने अन्यथाकरणे च कवेः प्रतिभा सततं व्याप्रियते। अतो नेदं शब्दार्थहरणम् उपादानं सङ्ग्रहो वा।

"वयं तु ब्रूमः - नेदमादानमन्यथाकरणं वा नवीनकविना पूर्वकाव्येभ्य एव क्रियते, अपि तु जीवनात्। जीवनं च त्रयाणामप्याधिभौतिकाधिदैविकाध्यात्मिकलोकानां सततसमुल्लासभूतम्। जीवनस्यैव छाया वस्तुतश्छायालङ्कारः। अत एव आनन्दवर्धनराजशेखरयोर्विवेचने तु अस्याश्छायाया अतिविस्तृताया एक एव कोणः साहित्याद् निपतितायाश्छायाया आपतितम्।

"भोजराजेन छायालङ्कारः स्वीकृतः, परन्तु तेन अन्यस्य उक्तेः प्रतिबिम्बग्रहण एव छायालङ्कारः सङ्कोचं गमितः। लोकोक्तिच्छाया, अर्भकोक्तिच्छाया, उन्मत्तोक्तिच्छाया, पोटोक्तिच्छाया तथा मत्तोक्तिच्छायेति च षड् भेदा अस्य छायालङ्कारस्य निरूपिताः। तदयुक्तम्। कथं केवलमुक्तीनामेवादानं छायात्वेन स्वीक्रियते, न कथावस्तुनः, वर्ण्यविषयाणां वा? अन्यच्च यदि उक्तिविशेषादानमेव छायालङ्कारस्तर्हि कथमयं केवलं षड्भेदात्मकः, महापुरुषोक्तिच्छायाप्रियोक्तिच्छायारिपूक्तिच्छायेत्यादिभेदैरस्य स्यादानन्त्यम्।

"यत्र आधिभौतिकजगति दृश्यमानानां पदार्थानां प्रत्यक्षदृष्टमिव रूपं काव्ये प्रगुणीभवति तत्र वास्तवमूला छाया। इयमपि द्विविधा- इन्द्रियगोचर-जगदुपजीविता लोकवार्तोपजीविता च। तत्र प्रथमाया

*उदाहरणानि सन्ति पण्डिताक्षमाराव-राजेन्द्रमिश्र-वनमालिविश्वालादीनां कथाः।*

*“चतुर्विधा अपीमाश्छायाः कविगतसंविदुन्मीलितैः लौकिकस्रोतोगृहीतैर्वा स्वस्वरूपैः सङ्करसंसृष्टिभ्यां काव्ये अनन्तरूपैरुद्योतन्ते। तत्रापि यत्र प्रतिभासंरम्भगोचरस्य रूपस्य प्राधान्ये सति उत्तमा, प्रतिभासंरम्भगोचरस्य प्रकृतस्रोतोविद्यमानस्य च रूपस्य समप्राधान्ये मध्यमा, प्रकृतस्रोतोविद्यमानस्य रूपस्य च प्राधान्ये अवरेति त्रैविध्यम्। इत्थं चतुर्विंशतिविधोऽयं छायालङ्कारः। अवरायां प्रतिबिम्बवत्, मध्यमायामालेख्याकारवत्, उत्तमायां च तुल्यदेहितुल्या परपुरप्रवेशतुल्या वा छाया आभासत इति विवेकः।*

संवादो हि नामान्यसादृश्यम्। कस्यचित् कवेरुक्तिः पूर्ववर्तिनः कवेरुक्तिमनुहरति तया साम्यं वा बिभर्ति, तत्र संवादो जायते। प्रतिबिम्बकल्प, आलेख्यप्रख्यः तुल्यदेहितुल्य इति त्रिधा संवादो निरूपित आनन्दवर्धनेन। राजशेखरेण च एतेषु परपुरप्रवेशसदृश इति चतुर्थोऽपि भेदो योजितः। एवमेव छायालङ्कारो भोजेन अभिनवकाव्यालङ्कारसूत्रकारेण च निरूपितः। संवादभेदेषु छायालङ्कारभेदेष्वपि अनुवादस्य प्रकाराः समाविष्टाः भवन्ति। परन्तु संवादेन छायया वाऽनुगृहीतायाम् अनुभावितायां वा रचनायां कश्चन विशेष उत्पद्यते। तद्यथाऽऽह आनन्दवर्धनः - तत्त्वस्य सारभूतस्यात्मनः सद्भावेऽप्यन्यस्य पूर्वस्थित्यनुयाय्यपि वस्तु भातितराम्। पुराणरमणीयच्छाययानुगृहीतं हि वस्तु शरीरवत्परां शोभां पुष्णाति। न तु पुनरुक्तत्वेनावभासते। तन्व्याः शशिच्छायमिवाननम्। (ध्वन्यालोके, ४.१४ वृत्तौ)।

संवादस्य छायालङ्कारस्य वा कैश्चिदुदाहरणैरेतद् विशदीकर्तुं सुकरम्। तद्यथा – इति रामवनगमनप्रसङ्गे सीताविषयकं राजशेखरस्य पद्यम्।

सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात् त्रिचतुराणि पदानि गत्वा।

गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्।।
शिरीषमृद्वी सुकुमारी सीता अयोध्याया वनगमनाय विनिर्गता पुरीपरिसर एव द्वित्राणि पदानि वेगेन गत्वा अश्राम्यत्, इतः परं कियच्चलनीयमिति च रामं पृष्टवती। तस्याः पृच्छया रामो विगलितवाष्पो बभूवेति भावः।
अस्मिन् पद्ये असकृदिति शब्दस्य प्रयोगात् सौकुमार्यगुणस्य च्युतिर्जातेति कुन्तकेन राजशेखर आक्षिप्तः। सकृत् पृष्टवती सीता,तावन्मात्रमेव रामस्याश्रुणः प्रथमावताराय अलं स्यात्।
अनेन पद्येन संवदता अस्याभिप्रायं वा अनुवदता तुलसीदासेन कवितावल्यामुक्तम्-
पुर तें निकसी रघुबीरवधू धरि धीर दिये मग में डग द्वै
झलकीं भाल कनीं जल कीं पुटि सूख गयै मधुराधर वै
फिर पूछति है चलनो अब केतक पर्न कुटी करिहो कित वै
तिय की लखि आतुरता पिय की अँखियाँ अति चारु चलीं जल च्वै।।
(पुराद् विनिर्गता धैर्यान्मार्गे पदद्वयं ददौ।
भालं स्वेदाञ्चितं तस्या अशुष्यच्चाधरस्तथा।
सीता पप्रच्छ रामं सा चलनीयं कियत् पुनः।
अथ पर्णकुटीं कुत्र करिष्यसि भवानिति।।
कातर्यं वीक्ष्य भार्यायाः रामस्यास्याः प्रियस्य तु।
रम्ये द्वे नयने वाष्पपूरमच्योतन्ताथ निर्भरम्।। अनुवादो ममैव)
अयं राजशेखरीयपद्यस्य भावानुवादश्छाया वा। तथापि असृकृदिति पदप्रयोगात् राजशेखरो यत् मनाक् स्खलितावधानः समजनि, तस्यात्र परिष्कारो व्यधायि गोस्वामिना। 'पर्न कुटी करिहो कित वै' इति प्रश्नयोजनापि तुलसीदासस्यैव, अथ च 'झलकीं भाल कनीं जल कीं पुटि सूख गयै मधुराधर वै' इति स्वकीयमाशयं तत्र संयोज्य राजशेखरीयपद्यापेक्षया चममत्काराधिक्यं च आविष्कृतम्।
तुलसीदासेन आलेख्यप्रख्यः संवादो राजशेखरीयपद्यस्य विहितः, तत्र किमपि वर्णाढ्यतापि आविष्कृता।

एवमेव सुभाषितरत्नकोशे विद्याया अन्यत्र विद्यापतेर्वा पद्यमेतत् –

अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु।
मुग्धामजातरजसं कलिकामकाण्डे
बालां कदर्थयसि किं नवमालिकायाः।

अस्याभिप्रायं संङ्क्षिपतापि विहारिकविना तत्र किमपि मर्मवेधित्वमापादितम् --

नहि पराग नहिं मधुर मधु नहि विकास यहि काल
अली कली सों ही बिंध्यों आगे कौन हवाल।।
( न परागो न माधुर्यं मधुनः सम्प्रतीह वै।
अलिश्च कलिकासक्तः का स्यादग्रे गतिः पुनः।।
अनु. – मम)।

अत्र उपमर्दसहासु अजातरजसम् इति पदयोः श्लेषगतो यो चमत्कारः स बिहारिकवेः दोधके नास्ति। परन्तु अन्योक्तौ प्रत्यादेशो यथा प्रखरस्तथा विद्याया उक्तौ नास्ति। बिहारिणा विद्यायाः काव्यपुरे प्रवेशं विधाय विनिर्गत्य च नवीनं पुरं व्यरचि। छाया गृहीता, तस्या तु छायायां सङ्क्षिप्तेः सौन्दर्यं विलसति। विद्यायाः पद्ये उपालम्भः, अत्र तु प्रत्यात्याख्यानम्।

एवमेव रहीमकवेः दोधकमस्ति –

सर सूखैं पंछी उड़ें दूजे सरहिं समाहिं
दीन मीन बिनु पच्छ के कहु रहीम कहँ जाहिं।।

पण्डितराजेन अस्य मनाग्विस्तारो विहितः, कश्चन विशेषोऽपि रहीमकवेर्दोधकस्यापेक्षया उद्भावितः, परन्तु मीनस्य पक्षरहितत्वं यथा श्लेषानुप्राणितं रहीमेन न्यरूपि तथा न पण्डितराजस्येतस्यामभिव्यक्तौ -

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्त।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु।।

इत्थं च द्वयोः काव्ययोः संवादे छायायां परवर्तिकाव्यं पूर्ववर्तिनः क्वचित् रमणीयतरं भवति, क्वचित् सङ्क्षिप्ततरं क्वचिच्च विस्तारितमपि जायते। तेन रम्यतरा छाया, सङ्क्षेपमूला छाया, विस्तारमूला छाया चेति छायायाः भेदाःकर्तुं शक्यन्ते,तथैव संवादस्यापि। अनुवादस्यापि एवमेव एतादृशा भेदा भवन्तीतित अग्रे दर्शयिष्यामः। तेन च छायायाः संवादस्य अनुवादस्य च प्रभूतं भवति साम्यमिति निश्चितम्। संवादतत्त्वे छायालङ्कारे चानुवादप्रक्रियापि समाविष्टा भवति। परन्तु संवादात्  छायालङ्काराद्वाऽनुवादो यथा संवदति तथा विभिद्यत इत्यपि सत्यम्। संवाददप्रक्रियाया छायालङ्कारेण वा नवीनाया एव रचनाया जनिर्जायते। अनुवादकस्तु नवीनां कामपि रचनां करोमीति न प्रतिजानीते, स तु एकस्याः भाषाया उपलब्धां रचनां अन्यस्यां भाषायां अनुवदति।

**प्रतिरूपम्**

रूपस्य प्रतिकृतिः प्रतिरूपम्। ऐतरेमहीदासस्य राद्धान्ते समस्तमेव जगत् ईश्वरेण विहितं रूपम्, तस्य प्रतिरूपं मनुष्यैः क्रियते। ऋग्वेद इन्द्रस्य कृते ऋषिणोक्तम्-

रूपं-रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयःशता दश।।
(ऋग्वेदे,०६.०४७.१८.३३)

तथा च –

रूपं-रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्।
त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा।।
०३.०५३.०८.२०

अत्र रूपस्य समानान्तरं प्रतिरूपं रचयति इन्द्र इत्युक्तम्। प्रतिरूपरचनायायां चापेक्ष्यते शिल्पनिर्माणचातुरी। अत एव प्रतिरूपस्य शिल्पस्य च वर्तते अन्योन्याश्रयसम्बन्धः। शतपथे अनया धिया उक्तम् – यद्वै प्रतिरूपं तच्छिल्पम् (शतपथब्रा. १.५.८) इति। भुवनस्य निर्माता परमात्माऽपि रूपं निर्माय तदनुसृत्य प्रतिरूपं विरचयति। कविरपि विश्वस्य भुवनस्य पा यद् रूपं विलोकयति, तदनुसृत्य स काव्ये तत्प्रतिरूपं विरचयति। अतश्चोक्तम्-

यो धर्ता भुवनानां य उस्राणामपीच्या वेद नामानिगुह्या
स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभन्तामन्यके समे
यस्मिन्विश्वानि काव्या चक्रे नाभिरिव श्रिता
त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे अश्वानयुक्षत नभन्तामन्यके समे।।

ऋग्वेदे, ०८.०४१.०५.२६-२७

प्रतिरूपनिर्माणेऽनुवादप्रक्रिया विनियुज्यते इति वर्तते प्रतिरूपस्य अनुवादस्य च साम्यम्, तथैव तिष्ठति च भेदोऽप्यनयोर्मध्ये। अनुवादो मूलस्य प्रतिरूपं प्रतिकृतिर्वा भवति, क्वचिच्चान्यथाऽपि भवति। तथैव प्रतिरूपं क्वचित् रूपमनुवदति, क्वचिन्नानुवदति।

**प्रतिबिम्बः**

प्रतिबिम्बसिद्धान्तः शैवदर्शने प्रतिपादितः। तथाहि – सर्वं विश्वं शिवमयम्। शिवस्तु विभागशून्यो अखण्डचैतन्यस्वरूपः। तस्मिन् जगदिदं प्रतिबिम्बति। यथा दर्पणे सर्वमविभक्तमपि हस्तपादादिकं विभक्तमिव भाति तथा परममहेश्वरे प्रतिबिम्बितो विभागयुतो विभाति। एतदेवोक्तमभिनवगुप्तेन -

दर्पणबिम्बे यद्वन्नगरग्रामादिचित्रमविभागि।
भाति विभागेनैव परस्परं दर्पणादपि च।।
विमलतमपरमभैरवबोधात् तद्वद् विभागशून्यमपि।
अन्योन्यं च ततोऽपि च विभक्तमाभाति जगदेतत्।।

(परमार्थसारे, १२-१३, पृ. २६)

यद्यपि आभास-प्रतिबिम्बादयः शब्दाः शाङ्करवेदान्तेऽपि शङ्कराचार्य-सुरेश्वरादिभिः प्रयुक्ताः परन्तु वेदान्तेषु विवर्तवादविजृम्भणात् प्रतिबिम्बस्य वास्तविकी सत्ता नास्ति। शैवशास्त्रेषु तु परमात्मन इयं कृतिः यदिदं जगत् अत एव अस्य मिथ्यात्वं प्रातिभासिकत्वं वा नोपपद्येत।
मूलकृतिर्बिम्बः, अनुवादस्तस्याः प्रतिबिम्ब इति वक्तुं शक्यते।

**आभासः**

आभास इति शब्दोऽपि शैवशास्त्रे पठ्यते। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां क्रियापादस्य द्वितीयाध्याये प्रथमविमर्शे स्वात्मनि कथं पूर्णा भावा भान्तीति उदाहरणीकर्तुम् एव मया प्रस्तुतम् इति कण्ठोक्त्या आचार्येण उद्धृतं स्वोपज्ञमिदं पद्यम् --

**आभासप्रतिभासतद्विरहयोश्चित्रात्मनोश्चञ्चला**
**स्वातन्त्र्यादवभास्वरस्ववपुषोस्त्यक्तक्रमं या स्थितिः।**
**तत्संवेदनसागरस्य विलसच्चन्द्रार्धशोभाभृतो**
**रूपं भावविभातृतामयमहं नित्योदितं संस्तुवे।।**

संसारोऽयं परमेश्वस्य आभासरूपः प्रतिभासरूपो वा। परमेश्वरस्तु आभासप्रतिभासतया प्रतीयमानोऽपि तद्भिन्नः। आभासो नाम अन्तःस्थितस्यैव बहिःप्रकाशनं नान्यथाभावः। आ किञ्चित् भासः प्रकाशनम्। एतद् विश्वं परमेश्वरस्य सीमिता छविः, अतश्च आभास इति कथ्यते। स चायमाभासो दर्पणबिम्बदृष्टान्ते व्याख्यातः। स एव उन्मेष उन्मीलनमित्यपि च कथ्यते। यदाह उत्पलदेवः – अन्तःस्थितमेव विश्वं बाह्यता निरुपादानं प्रकाशयतीति। उक्तं च तन्त्रालोके

**निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः।**
**अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः।। (३.४)**

पण्डितो बलजिन्नाथस्तु आभासं व्याकुर्वन्नाह – अनवच्छिन्नशुद्धपरिपूर्णचिदानन्दमात्रस्वरूपत्वेन सततं प्रकाशमानस्यैव परस्य तत्त्वस्य स्वशक्तीनां बहिर्मुखतया प्रतिबिम्बैनैव तत्तत्-कला-तत्त्व-भुवन-भाव-अभाव-शरीर-प्रमातृ-प्रमाण-प्रमेयादिरूपतया प्रकटीभावः। तेन सदाशिवादीनि धरान्तानि तत्त्वान्याभासा एव। केवलं शिव एव नाभासो अपि तु स्वप्रकाशेन काशमानं पारमार्थिकं तत्त्वं सः।' इति (काश्मीरशैवदर्शनबृहत्कोशे,प्रथमभागे, पृ. ८४)।

वेदान्तदर्शनेऽपि कदाचित् शैवशास्त्रप्रभावादाभासस्य प्रतिबिम्बवादस्य च चर्चा विद्यारण्यप्रभृतिभिराचार्यैर्विहिता। तद्यथोक्तं विवेकचूडामणौ –

यत्रैष जगदाभासो दर्पणान्तः पुरं यथा।
तद् ब्रह्माहमिति ज्ञात्वा कृतकृत्योभविष्यसि।। वि.चू.२९१[8]

अनुवादो मूलरचनाया आभासो वा प्रतिबिम्बो वेति प्रश्नोऽत्र उदेति। अनुवादस्य सत्ता तु मूलकृतेरिव पारमार्थिकी एव न व्यावहारिकी। अतो न तत्र वेदान्तसम्मतो आभासवादः प्रतिबिम्बवादो न श्लिष्यति, अपितु शैवशास्त्रसम्मतस्य आभासस्य प्रतिबिम्बस्य वा विनियोगस्तत्र अनुमन्तुं शक्यते। अतश्च -

**ईश्वरस्य यथासृष्टिः तत्त्वतः पारमार्थिकी।**
**प्रतिरूपं तथाऽऽभासास्तस्याः वै पारमार्थिकाः।।८।।**
**सत्ता वास्तविकी तद्वत् रचनायाः कस्यचित् कवेः।**
**अनुवादः कृतस्तस्यास्तथा वास्तविको भवेत्।।९।।**

## इति पञ्चमोऽध्यायः

8 *विवेकचूडामणिः* – शङ्कराचार्यविरचितः, अद्वैताश्रमः, कोलकाता, २००५

# अथ षष्ठोऽध्यायः
## अनुवादप्रयोजनानि अनुवादमहिमा च

प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तत इति प्रायोवादः। अनुवादो हि नाम किञ्चिद् विशिष्टं सर्जनात्मक कर्म। तच्चाहमिदानीमेतस्याः अमुकनाम्न्याः कृतेरमुकस्य वा ग्रन्थस्य स्वकीयायां भाषायामनुवादं करिष्य इति सङ्कल्प्य केनचित् सुधिया विधीयते। एवं च विहिते सङ्कल्पे अनुवादकर्मप्रवृत्तेर्न न खलु न भवेत् किञ्चित् प्रयोजनं तस्यानुवादकर्मण इति निश्चप्रचमेव।

**प्रयोजनं तस्य द्विविधम्। (६.१)**

तस्य अनुवादकर्मणः द्विविधं प्रयोजनं भवितुमर्हति- सामान्य विशिष्टं च। वाङ्मयभाण्डागारे सन्ति तादृशानि रत्नानि येषामाभा रूपान्तरं नेया, अन्यभाषाविदां परिचयपथं प्रापणीयेति सामान्यं प्रयोजनम्। अथ च मम समाजे मम क्षेत्रे अस्याः रचनायाः ज्ञानं नितरामावश्यकं, अनेन मदीयाः स्वजनाः मम शिष्या वा प्रीणीयुरिति परिस्थितिविशेषमवधार्य अनुवादकः कृतिविशेषस्य अनुवादकर्मणि प्रवर्तते इति विशिष्टमपि प्रयोजनं भवितुमर्हति। सर्वजनोपोगित्वात् सार्वकालिकत्वाच्च सामान्यप्रयोजनमधिकृत्य अत्र विवेचनं प्रस्तूयते। तत्र द्वैविध्यं कथमित्युच्यते -

**वाङ्मयद्वैविध्यात् प्रयोजनद्वैविध्यम्। (६.२)**

द्वैविध्याद् वाङ्मयस्य प्रयोजनं द्विप्रकारकं स्यादिति भावः। तद्यथा - इह तावत् वाङ्मयं द्विविधं अविचारितरमणीयं विचारसुस्थं च। अविचारितरमणीये विमलप्रतिभानशालिनः कवेः कृतौ स्वपरिस्पन्दसौन्दर्यं निजहृदयविकस्वरभास्वरभावोच्छलनं सहजा अनायासा चाभिव्यक्तिर्भवति। विचारसुस्थे पुनः साहित्ये विमर्शस्य चिन्तनस्य अध्ययनस्य अन्वीक्षणस्य वा भवति प्रकाममवकाशः। एतद्वयं च ललितवाङ्मयं वैचारिकं वाङ्मयं चेति संज्ञसुं शक्यते। अनुवादः उभयविधस्य वाङ्मयस्य भवितुमर्हति। इत्थं च

विधागतप्रकारेण द्विधा भवत्यनुवादः – काव्यानां शास्त्राणां च भेदात्। भवति चात्र सूत्रम् –

**द्विविधश्चायम्, काव्यानुवादशास्त्रानुवादभेदात्।। (६.३)**

काव्यानुवादे महाकाव्यानि, खण्डकाव्यानि, कथाख्यायिकादिगद्यकाव्यानि, कथनिकोपन्यासादिनवीनकथासाहित्यम्, ललितनिबन्धा, यात्रावृत्तान्तास्तथान्ये च ललितवाङ्मयप्रकारा अनूद्यन्ते। शास्त्रानुवादे पुनः विविधदर्शनग्रन्थाः वेदाङ्गानि उपवेदाः आधुनिकं वैज्ञानिकं साहित्यं चानूदितुमर्हम्।

काव्यग्रन्थानानुवादस्य शास्त्रियग्रन्थानामनुवादस्य च प्रक्रिययोर्भवति भूयान् भेदः। तथैव काव्यग्रन्थानामनुवादस्य शास्त्रग्रन्थानमनुवादस्य च कानिचित् प्रयोजनान्यपि विभिद्यन्ते, कानिचित्तु समानान्येव। शास्त्रियग्रन्थानामनुवादैः शास्त्रज्ञानस्याभिवृद्धिः लौकिकव्यवहारज्ञानं विविधसंस्कृतीनां च ज्ञानं सिद्ध्यति।

काव्यामनुवादस्तु कविकर्मतुल्यतां भजते। अतएव यावन्ति काव्यस्य प्रयोजनानि तावन्ति अनुवादेनापि सिध्यन्ति। काव्यस्य तु प्रयोजनानि मम्मटः सर्वाङ्गरम्यं प्रत्यपादयत्। तथाहि –

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ।।

काव्यकर्तुरिव अनुवादकर्तुरपि अनुवादे कर्मणा यशोऽर्थप्राप्तिश्च भवितुमर्हतः। व्यवहारज्ञानं, शिवेतरक्षतिः सद्यःपरनिर्वृतिः उपदेशावाप्तिश्च मुख्यतयाऽनूदितस्य ग्रन्थस्य पाठकानां कृते सिद्ध्यन्ति। तथापि कविकर्मापेक्षया अनुवादकर्मणा अन्यान्यपि समधिकतरं गौरवमयानि प्रयोजनानि सिध्यन्ति। अनुवादेन वैश्विकसंस्कृतेर्निमाणम्, भाषासु पारस्परिकसहकारस्य सामञ्जस्यस्य विकासः, इतरभाषाणां साहित्यस्य ज्ञानं, विविधविषयाणां ज्ञानं व्युत्पत्तिर्वेति प्रयोजनानि साधयितुं शक्यन्ते।

अन्यच्च – क्वचित् कस्यचित् देशस्य कस्याश्चन भाषाया मूलग्रन्था विलुप्यन्ते, अन्यस्मिन् देशे अन्यस्यां भाषायां विहितास्तेषामनुवादास्तिष्ठन्ति। परवर्तिभिः मनुष्यसन्ततिभिः सञ्जाते तेन अन्येन देशेन तया अन्यया च भाषया परिचये, स्वस्य देशस्य ते ते ग्रन्थाः अनुवादमाध्यमेन पुनरुद्ध्रियन्ते। एतत् कार्यं महनीयम्, उभयभाषाविद्भिः तत्तद्विषयनिष्णातैः सपरिश्रमं साधयितुं शक्यम्। एतच्च कथमित्यग्रे वितनिष्यामः।
अन्यदपि महत्प्रयोजनमनुवादकर्मणः। अनुवादेन मूलरचनाया अज्ञाताः पक्षा उन्मीलन्ति, मूलरचनायाः स्वारस्यं प्रकटीभवति, तथा च मूलरचनाया पुनर्मूल्याङ्कनं सम्बोभवति। तस्माच्च काऽपि कृतिः अनुवादार्थं कियदुपादेया -- इत्यनेन तस्याः कृतेर्महिमा ज्ञातव्यो भवति। तेन अनुवादः मूलरचनाया मूल्याङ्कनाय मानदण्डायते। एतदपि अग्रे वितनिष्यामः।
अनुवादेन गृहीतृभाषायाः साहित्यस्य शब्दकोशस्य च समृद्धिः, ज्ञानकोशस्य वृद्धिः सञ्जायते।
अनुवादैः नवीना शब्दावली गृहीतृभाषायां सङ्क्रामति। तेन भाषा सम्पन्नतरा जायते। एतत् यद्यपि वैज्ञानिकसाहित्यस्य अनुवादैः अधइकतरं समभाव्यते, किन्तु काव्यानामनुवादैरपि भाषा समृद्धा भवति। संस्कृतभाषायास्तु अनुवादैर्बहूपकृतम्। अवलोक्यन्तां प्रेनारायणस्य द्विवेदिनोनुवादाः। तत्र कथं अहमहमहमिकया नवीना पदावली नवीना आभाणका प्रौढोक्तयो वा तस्यानुवादैः संस्कृत समवतरन्ति। दिङ्मात्रमुदाह्रियते तस्य बिहारिकवेः दोहाद्वयस्य संस्कृतानुवादौ

**मयि ब्रुवाणे नहि सा ब्रवीति**
**स्नेहे कृते कुप्यति दृष्टिपाते।**
**विलज्जमाना हसतीव मुग्धा**
**गेहे जने सत्यपि नेत्रवार्ता।।**

अत्र नैनन सों करें बात...इत्यस्या अभिव्यक्तेः कृते नेत्रवार्ता इति पदं प्रायोजि कुशलेनानुवादकेन। एतत्पदं संस्कृते नवीनम्। तथैव -

क्षीणा प्रतिदिनं बाला जायते साऽपि सुन्दरी।
कर्पूरवन्न लुप्ता स्यादिति मे वर्तते भयम्।।

अत्र कर्पूरवल्लोप इति उपमा अयोनिमर्थमादधाति। अत्र कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने इति प्राचीनसंस्कृतकाव्ये प्रयुक्ताया उपमाया इयमुपमा विभिद्यते। तत्र दाहेन कर्पूरस्य सहसा लोपः, अत्र तु अदग्धस्यापि कर्पूरस्य शनैः शनैः अविज्ञातं लोपः सूचितः। कर्पूरः अपिहितो निहितः शनैः शनैः स्वयं लुप्यते वायोरेव स्पर्शेन।

अनुवादैर्वैदेशिकसाहित्यपरम्पराणां ज्ञानं भवति, तेन गृहीतृभाषायां नवीनाः भावा विचाराश्च सञ्चार्यन्ते। रामशास्त्रिणा *सिन्धुवादवृत्तम्* इति कथाप्रबन्धे वणिजः सिन्धुवादस्य (सिन्दबादस्य वा) कथाः अनूदिताः। एवमेव आङ्ग्लभाषायाः प्रणयकाव्यानि एल.ओ.जोशि-हरहरत्रिवेदिभ्याम् *आङ्ग्लरोमाञ्चम्* इति नाम्नि ग्रन्थे अनूद्य प्रस्तुतानि।

चिन्तामणिद्वारकानाथदेशमुखेन ने *गाँधीसूक्तिमुक्तावल्यां* महात्मना गान्धिना समुदीरितानां सूक्तीनां हृद्यनिरवद्या अनुवादा गुम्फिताः।[9] तेन गान्धीदर्शनस्य ज्ञानं भवति। एवमेव महात्मनः आत्मकथासंस्कृतेऽनूदिता तस्य जीवनदर्शनं संस्कृते प्रसारयति।

रामकृष्णवारियरः स्वामिनो विवेकानन्दस्य आङ्ग्ल्यां बङ्गभाषायां च निबद्धानां काव्यानां सरसानुवादान् *विवेकानन्दकाव्यामृतम्* (2011) इति पुस्तके विहितवान्। तेन विश्वप्रतिष्ठितस्य स्वामिनो विवेकानन्दस्य न केवलं संस्कृते नवप्रतिष्ठासमजनि, विवेदानन्दो न केवलं महान् साधकः ऋषिरभवदपितु कवित्वेनापि सोऽतिशेते इति नवीनं तथ्यं प्रतिष्ठाप्यते।

वस्तुतस्तु अनुवादकर्मणा नाना भाषाः नाना समाजा जातयः नानादेशाश्च पारस्परिकं विप्रकृष्टत्वं विहाय निकटमानीयन्ते। तैन विश्वस्य वैविध्यमपि लक्ष्यीक्रियते, एकसूत्रतापि। अतश्च अनुवादैः संस्कृतिः पोष्यते, सौहार्दं स्थाप्यते, जनानां समाजानां राष्ट्राणां च मुक्तये पीठिका विनिर्मीयते। भवन्ति चात्र श्लोकाः -

---

9 गांधी स्मारकनिधिः, नयी दिल्ली, १९९७

**विश्वसंस्कृतिनिर्माणम् संवादश्च परस्परम्।**
**नानाभाषासु काव्येषु समाजेषु जनेष्वपि।।**
**नानाराष्ट्रसमाजानां ज्ञानं सौहार्दभावना।**
**व्यक्तेर्मुक्तिः समाजस्य मुक्तिर्विश्वस्य चापि वै।।**
**विलुप्तानां क्वचिन्मूलग्रन्थानां कालभेदतः।**
**तथा च पुनरुद्धारो विशेषज्ञैः प्रयत्नतः।।**
**अनुवादेन साध्येत सर्वमेतत् प्रयोजनम्।**
**यज्ञेन तपसा कर्म चानुवादस्य स्यात् समम्।।**

अनुवादेन द्वयोः भाषयोः द्वयोः संस्कृत्योः साम्यं च नैकट्यं च वैषम्यं च विप्रकृष्टत्वं च ज्ञातुं शक्यते। तथैव मूलग्रन्थकारस्य चिन्तनपरिधिः अन्यस्यां भाषायां कथं श्लिष्यतीत्यपि अनुवादेन साध्यते। यथा – महाकवी रवीन्द्रनाथः संस्कृतनिष्ठां बङ्गभाषां प्रयुनक्ति, तदीया विचारा अपि उपनिषदां सरणिमवगाहन्ते इति संस्कृतभाषया तस्य रचनानामनुवादे भवति किमपि सौकर्यम् आकर्षणं च। संस्कृतकाव्यालोकेन भास्वराः रवीन्द्रनाथस्य मौलिकरचनाः संस्कृतानुवादेषु अतीव रुचिकरा बाभान्ति। तस्य रचनाः संस्कृतभावभूमिं बहुधा स्पृशन्ति, संस्कृतसाहित्यरसिकान् कालिदासादीनां कृतीरिव अनुसन्धानाय अनुवादाय च आह्वयन्ति इति युक्तमेव रवीन्द्रसाहित्यस्य अनुवादाय नैके संस्कृतपण्डिताः प्रायतन्त। रवीन्द्रनाथस्य कृतीनां शाब्दिकाः, भावपूर्णाः पुनारचनात्मकाश्च परःशतं अनुवादा सुधीभी रचनादक्षैरनुवादकैर्विहिताः। तत्र ये मूलबङ्गभाषाया अनुवादमकुर्वन्, मूलकाव्यस्य लयं छन्दश्चापि संस्कृते समवतारयितुं प्रायतन्त, तेषामनुवादे अपरो विशेषः, ये संस्कृतच्छन्दस्सु रवीन्द्रकाव्यमन्ववदन्, तेषामनुवादे अपरः। तथाहि गीताञ्जलेः प्रथमेयं गीतिः –

आमार माथा नत करे दाओ हे तोमार
चरणधूलीरतले
सकल अहंकार हे आमार
डुबाओ चोखेर जले।

अधिकारीवर्येण गीताञ्जलिगीतयः संस्कृतच्छन्दःसु अनूदिताः। एतासां पङ्क्तीनां तदीयोऽनुवादो वर्तते –

शीर्षं मे तव पादसक्तरजसां नीचैः प्रभो धारय।
सर्वं गर्वचयं ममाहमिति मे नेत्राम्बुभिः प्लावय।।

अत्र छन्दोनुरोधात् किमपि वैशिष्ट्यं लयभेदश्च अनुवादं वृणुते।

काश्यपकवेः कालीपदतर्काचार्यस्य अनुवादः

मम शीर्षं नय नतिम्
अयि तव चरणरेणुतले
सकलमहङ्कारं मम
मज्जयाक्षिदले ।

अनुवादेन मूलग्रन्थकारस्य महिमा वृद्धिं याति, तदीयरचनायाः वैश्विकः प्रसारो भवति। तद्यथा वारेनहांस्टिङ्ग्जः १७७३-तमे क्रिस्तुवर्षे कलकत्तानगरे गवर्नरपदे नियोजितः। तस्य प्रेरणया संस्कृतपण्डिताः *विवादार्णवसेतुं* नाम धर्मशास्त्रसङ्ग्रहग्रन्थं निर्मितवन्तः। तस्यैव च प्रेरणया चार्ल्सविल्किंसः वाराणसीं गत्वा संस्कृतमध्यैष्ट, अनन्तरं च श्रीमद्भगवद्गीतामाङ्ग्ल्यामन्ववदत्। १७८५-तमे क्रिस्तुवर्षे विल्किंसकृतो गीतानुवादः प्रकाश्यतां गतः। एतं च गीतानुवादं एतस्यान्ययोरोपीयभाषानुवादं वा पाठं पाठं शापेनहार-थारो-इमर्सनसदृशाः सुप्रथिताः पाश्चात्त्यदार्शनिकाः भारतीयतत्त्वचिन्तनं सस्पृहं सश्रद्धं विभावितवन्तः। विश्वस्मिन् विश्वे चानुवादेनानेन भारतीयमनीषाया प्रतिष्ठा समधिकतरं समजनि।

एङ्केटिन दुपराँ इत्याख्येन फ्रेञ्चविदुषा दाराशिकोहस्य उपनिषदां पारसीकभाषानुवादेभ्यः लैटिनभाषानुवादो व्यधायि। अयं चानुवादो पेरिसनगरात् 1801-1802 वर्षयोः भागद्वये प्रकाशितः। पारसीकानुवादस्यापि पुनरनुवादः रिक्सनर् (Th. A. Rixner) इत्याख्येन विदुषा जर्मनभाषायां विधाय 1808 वर्षे प्रकाश्यतां नीतः। गीताया अनुवादेनेव एताभ्यामनुवादाभ्यामपि तदानीन्तनाः विश्वविश्रुताः दार्शनिकाः शापेनहार-शेलिंग-इमर्सन-थारो प्रभृतय उपनिषदां तत्त्वदर्शनेन परिचिताः प्रभाविताः तस्य प्रकृष्टतां बहुधा

श्लाघयामासुः।[10] एतेन वैश्विकचिन्तने भारतस्य महिमा स्वीकृतिं प्राप।[11] एतस्मिन्नेव काले श्लेगलेन भगवद्गीताया अनुवादो विहितः, यस्यानुशीलनं हुम्बोल्ट-हेगेल-सदृशान् विद्ववर्ण्यान् महनीयांश्च दार्शनिकान् प्राभावयत्।.[12] एतैः मनीषिभिः उपनिषदां गीतायाश्च महिम्नो य उद्घोषो विहितस्तेन भारतेऽपि ऋषीणां चिन्तनमाश्रित्य चेतना जागरूकता च प्रससार। राजाराममोहनराय-केशवचन्द्रसेनसदृशाः मनीषिणः उपनिषदनुशीलने प्रवृत्ताः। राममोहनरायश्च नैकासामुपनिषदामाङ्ग्ल्यामनुवादमपि चकार।[13]
अनुवादैः देशे क्वचिन्नवजागरणम्, क्वचित् समाजे नवचेतनासञ्चारः नवीनानामभ्युदयद्वाराणामुद्धाटनं च जायते। क्वचित् विस्मृतपरम्पराः पुनराविष्क्रियन्ते, क्वचित् संस्कृतेर्मानदण्डानां पुनः प्रत्यभिज्ञा विधीयते। रामायण-महाभारत-पुराणप्रभृतीनां ग्रन्थानां भारतीयभाषासु विविधैरनुवादैः समस्तं भारतराष्ट्रमध्रियत, इदानीं यावत् एकीभावं च धत्ते। । वैदेशिकभाषायां विहितेनानुवादेनापि अस्माकं देशस्य कृते निर्व्यूढा अनितरसाधारणी अतिशयमहिमशालिनी भूमिका।

तथाहि – कालिदासस्य अभिज्ञानशाकुन्तलं सर-विलियम जोंसवर्येण आङ्ग्लभाषायाम् अनूदितम्। विभिन्नभारतीयभाषासु फैञ्च-

[10] Schopenhauer declared them as ‘the product of the highest human wisdom’ Schopenhauer used to worship the book of Oupnekh’hat before going to bed. “There is no other book in the whole world, the reading of which is as rewarding and solemn, as that of this book, it has comforted me in my life and it will also comfort me while dying. Winternitz, History of Indian Literature, vol I, p.248

[11] ‘Starting from the mystic teachings of the Upanisads a thought current reaches the mysticism of the Persian Sufism, and the mystic theosophic logos-doctrine of Non-Platonists and the Alexandrian Christians right up to the teachings of Christian mystics Eckhart and Tauber and finally to the philosophy of great German mystics pf 19th century – Schopenhauer. तत्रैव, Vol.I,p.246

[12] In 1823 August Wilhelm von Schlegel published his edition of *Bhagavadgīta* with Latin translation. Humboldt wrote “It is perhaps the most profound and the most sublime that the world has on record” (Winternitz, Vol I Introdution p 15).

[13] Winternitz Vol I. Introdcution p 17).

जर्मनप्रभृतियोरोपभाषास्वपि[14] भूयसा शाकुन्तलानुवादाः प्राकाश्यं जाताः, तेन कालिदास्येयं रचना बहुधा रङ्गे प्रायुज्यत। जोंसकृतस्यास्यानुवादस्यापि अनुवादं व्यदधाद् जर्मनभाषायां जर्मनीदेशवास्तव्यः फोर्स्टरः। तेन महाकविः गोइथे अतितरामभिभूतः जर्मनभाषायां शकुन्तलामधिकृत्य किमपि काव्यं प्रणिनाय, यस्यायं वासुदेवविष्णुमिराशीकृतः संस्कृतानुवादः

वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्
यच्चान्यन्मनसो रसायनमहो सन्तर्पणं मोहनम्।
एकीभूतमभूतमपूर्वमथवा स्वर्लोकभूलोकयो-
रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्॥

न केवलमेतावदेव, गोइथेकवेः अन्तिमा सर्वश्रेष्ठा च कृतिः फाउस्त इति नाटकं शाकुन्तलेन प्रभावितम्। योरोपदेशे शिलरप्रभृतयो नैके कवयः कालिदासेन प्रभाविताः। भारतस्य महनीया छविः समस्ते संसारे प्रसिद्धिः प्राप। अथ च आस्माकं देशेऽपि नवजागरणभावः अनेन प्रवर्धमानभारतमहिम्ना कामपि पुष्टिं यातः। ऊनविंशशतके विंशशतकस्य पूर्वार्धे च नैके सुप्रथिताः नाट्यसूत्रधाराः स्वाधीनताभावाभिव्यञ्जकमिति शाकुन्तलं रङ्गे प्रयुञ्जिरे। एतस्य सर्वस्य नवोन्मेषस्य कारणमभवद् विलियमजोंसकृतः शाकुन्तलानुवादः।

गोइथेमहोदयस्तु आजीवनं शाकुन्तलमुग्ध एव शिष्टं चत्वारिंशद्वर्षप्रायं स्ववयो व्यत्यापयत्। 1830तमे क्रिस्त्वब्दे फ्रांसदेशस्य प्रथमं संस्कृतप्राध्यापकः शाकुन्तलस्य फ्रैञ्चभाषानुवादं प्राकाशयत्, तस्यैकां च मुद्रितां मातृकां स गोइथेवर्याय तस्यैव महाकवेरुपरि उद्धृतायाः कविताया प्रथमपृष्ठे विन्यासं विधाय प्रैषयत्। गोइथेवर्यस्य पुस्तकप्राप्तिस्वीकर्तिं प्रेषयन् लिलेख – शाकुन्तलं मम निशाः दिवसेभ्योभ्योऽपि रमणीयतराः व्यदधात्, एतस्य नाटकस्याध्ययनं

[14] विवरणार्थम् अजन्तापत्रिकायां (.6.6, हैदराबाद, 1954) शाकुन्तल के जर्मन अनुवाद – इति प्रेमकिशोरस्य तथा च तत्रैव (शाकुन्तल के रूसी भाषा में अनुवाद (7.9,1955) इति च लेखः द्रष्टव्यः।

मम जीवने नवयुगावतार आसीदिति। विलियमजोंसकतस्यानुवादस्यैवायं प्रभाव आसीद् यद् योरोपेषु शिलरप्रभृतिभिः महाकविभिः कालिदासमनुहरद्भिः काव्यानि प्रणीतानि स्वच्छन्दतावादस्य च धारा योरोपसाहित्ये तेन प्राबल्यं याता।

समस्तेऽपि संसारे अभिज्ञानशाकुन्तलं नाट्यविशारदैः रङ्गे बहुधा नानाभाषानुवादेषु प्रायोजि इत्यत्रापि जोंसकृतोऽनुवाद एवाभूद् मूलकारणम्। तद्यथा - Calcutta Theatre इति नाट्यदलं वैदेशिकैः स्वभाषानाटकानामवलोकनाय 1779 वर्षे स्थापितम्। अनेन नाट्यदलेन शेक्सपीयरादीनां नाटकानि मञ्चे प्रयुज्यन्ते स्म। परन्तु जोंसकृतानुवादस्य प्रकाशनात् परं 1789 वर्षे एव अनेन नाट्यदलेन शाकुन्तलस्य रङ्गावतारो व्यधायि। फ्रांसदेशे जेरार्ड डे नर्वल (Gérard de Nerval) इत्याख्येन नाट्यसूत्रधारेण 1850-वर्षे शाकुन्तलं प्रयोजितम्। 1858 तमे वर्षे गौर्टियरः (Gaurtier) शाकुन्तलश्रितां नृत्यनाटिकां निर्मितवान्, या च फ्रांसदेशे तस्मिन्नेव वर्षे जुलाईमासस्य चतुर्दशे दिनाङ्के प्रस्तुता। अस्यां नृत्यनाटिकायां स्वाधीनतायाः भावस्तथा व्यक्तिमुपयातो यत् केचन समीक्षकाः फ्रांसदेशस्य क्रान्तिघटनया अस्याः प्रस्तुतेः सम्बन्धं योजयन्ति।[15] मिशेल् (Michelet) इत्यनेन *The Women* इत्याख्यं फ्रैञ्चनाटकं 1859- तमे वर्षे प्रयोजितम्, अस्मिन् नाटके कालिदासीया शकुन्तला प्रेम्णः प्रकाशनाय अभिनन्दिता, फ्रांसदेशीया युवत्यः शाकुन्तलं पठन्तु, शकुन्तला इव भवन्तु इति च सन्देशः प्रादायि।[16]

1920 तमे वर्षे झालावाडनगरस्य महाराजो भवानीसिंहः एकां नाट्यशालां स्वराज्ये निरमापयत्। नाट्यशालाया उद्घाटनावसरे शाकुन्तलानुवादः प्रयुज्येत इति तेन आज्ञा दत्ता। 1921 तमे वर्षे

---

[15] 'The date of July $14^{th}$ reinforces the hypothesis of a secret affinity between Śakuntalā and French revolution.' Lyne Bansat Bodoun: The Reception of Asian Performing Arts in XVII-XX Century Europe – The Case of France
[16] तत्रैव

जुलाईमासस्य षोडशे दिनाङ्के प्रस्तुता। उद्घाटनमहोत्सवे राज्ञा भवानीसिंहेन समीपवर्तिराज्यानां नैके राजान आमन्त्रिताः। शाकुन्तलं च तत्र भारतस्य स्वाभिमानप्रतीकतया आविष्कृतम्। एवमेव पृथ्वीराजकपूरः पृथ्वीथियेटर्स इति नाट्यदलं स्थापयामास, तस्यापि प्रथमः प्रयोगः शाकुन्तलमेवासीत्। शाकुन्तलस्य प्रयोगेण भारतीयताया आदर्शा मानदण्डाश्च स्थापनीया इति मनीषा मनस्विनः पृथिव्या नाट्यसम्राडिति प्रथितस्य पृथ्वीराजस्य बभूव। मार्चमासस्य नवमे दिनाङ्के 1945 तमे क्रिस्तुवर्षे पृथ्वीराजनिर्देशितं शाकुन्तलं मुम्बय्यां प्रस्तुतमभवत्, सार्धद्विशतं च प्रयोगा एतस्य नाना नगरेषु जाताः।[17]

एतेषु सर्वेषु नाट्यप्रयोगेषु बीजभूतमभवद् विलियमजोंसविहितः शाकुन्तलानुवादः, तदनन्तरं च भारतीयभाषासु विहिता अन्ये अनुवादाः।

पुनश्चात्र भवन्ति परिकरश्लोकाः

**मूलं काव्यं पुष्पं परिमलसदृशा भवन्त्यनुवादाश्च।**
**साहित्यस्योद्याने रसिकभ्रमराः सदा तृप्ताः।।**
**महिमानं ते प्रापुस्त्वनुवादैः किल च कालिदासाद्याः।**
**विश्वव्याप्तां कीर्तिं राष्ट्रे पुनरपि च गौरवम्।।**

**रवीन्द्रनाथो यदि नाकरिष्यत्**
**गीताञ्जलेराङ्ग्लगिरानुवादम्।**
**कवीन्द्र इत्यस्य तु नाभविष्यत्**
**समस्तसंसारगता प्रतिष्ठा।।**

इत्थं च निखिलं वैश्विकं वाङ्मयं क्रोडीकरोति अनुवादकर्म।

**अनुवादैर्विलुप्तग्रन्थानां पुनरुद्धारः**

---

[17] विवरणार्थम् Nāṭyaśāstra in Modern World इति मत्सम्पादिते ग्रन्थे ममैव "Abhijñānaśākuntalam on Modern Stage" इति शीर्षकान्वितो लेखो द्रष्टव्यः पृ. 99-127।

पञ्चमशतकभवः चान्द्रव्याकरणकारः चन्द्रगोमी संस्कृते लोकानन्दं नाम नाटकं प्रणिनाय। मणिचूडजातकाश्रितं नाटकमिदं संस्कृतसाहित्यस्य परमदुर्लभमेकं रत्नमभूत्, यत्तु विलुप्तम्। बुद्धमतानुयायिषु चन्द्रगोमी बहु मन्यते, अतस्तस्य इयं कृतिः भोटभाषायामनूदिता उपलभ्यते च। भोटभाषानुवादस्य जर्मनभाषायाम् आङ्ग्लभाषायां चानुवादः सुविश्रुतेन विदुषा मिखाएलहानमहोदेन विहितः। तेन अस्याः कृतेः महत्त्वं श्रीहर्षकृतनागानन्दादिनाटकेष्वस्याः प्रभावश्च ज्ञातुं शक्यते।

एवमेव अश्वघोषकृतबुद्धचरितस्य विलुप्ताः सर्गाः, बौद्धानामवदानसाहित्यम्, नागार्जुन-दिङ्गनाग-धर्मकीर्तिप्रभृतीनां बौद्धदार्शनिकानां च संस्कृते प्रणीताः ग्रन्थाः लुप्ताः, तेषां भोटभाषायां चीनीभाषायां वा येऽनुवादाः प्राप्यन्ते, तेभ्यः मूलग्रन्थानां पुनरुद्धारः समभाव्यत। इत्थं च भारतीयमनीषायाः चिन्तनपरम्पराया वा पुनराविष्कारे वरीवर्ति अनुवादानां अनितरसाधारणी भूमिकेति न संशीतिः।

**साहित्यस्य प्रतिमानम् – अनुवादः**

प्रयोजनविचारप्रसङ्गे अनुवादो मूलरचनायाः कृते निकष इति यदुक्तं तदिदानीं विचार्यते। कस्याश्चित् साहित्यरचनायाः कियन्तः कीदृशाः कतिविधाश्चानुवादा जाता इति ऐतिह्यं तस्याः रचनायाः उत्कृष्टताया निर्णये सूचकं भवति। यावती श्रेष्ठा रचना, नाना रचनाकारैस्तस्या नाना अनुवादा विविधासु भाषासु विधीयन्ते। तद्यथा संस्कृतसाहित्यभाण्डागारस्य भगवद्गीता, पञ्चतन्त्रम्, मेघदूतं चेति इमे त्रयो ग्रन्थाः सर्वाधिकमनूदिताः, एतेन एतेषां त्रयाणापि उत्कृष्टता स्थापिता भवति।

अन्यच्च यावती श्रेष्ठा रचना तावदेव जटिलं कठिनं च भवति तस्या अनुवादः। अत एव यावती श्रेष्ठा भवति काऽपि रचना तावानेव समाह्वयं सा प्रस्तौति अनुवादकानां कृते अनुवादकरणाय। तावदेव चाकर्षणं तस्या भवति अनुवादकानां कृते। अत एव एकतोऽनुवादकानां कृते समाह्वयदानं, अपरतश्चाकर्षणम्, एकतः अनुवादस्य असम्भाव्यता अपरतश्च अनुवादकानामहमहमिकया

तस्या अनुवादार्थं प्रवृत्तिरिति कस्याश्चन कृते श्रेष्ठताया मानदण्डाः भवन्ति। गीतगोविन्दस्यानुवादोऽसम्भव इत्यभाणि कैश्चित् समीक्षकैः। असम्भाव्यत्वेऽपि न न प्रवृत्ताः अनुवादका एतस्य अनुवादकरणे। न केवलं भारतीयासु हिन्दीप्रभृतिषु भाषासु अपितु योरोपदेशानामपि नाना भाषासु गीतगोविन्दमनूदितम्।

**अनुवादेन मूलरचनाकारस्य कृते प्रेरणा**

यथा रसिकसमाजे अनुवादाः मूलरचनाया नवसन्धाने नवाविष्कारे नवावगतौ सहायतामाचरन्ति, तथैव रचनाकाराणामपिकृते अनुवादाः मूलरचनाया मार्जनाय संशोधनाय साहाय्यं कुर्वन्ति। क्वचिच्च एक एव कविर्बह्वीषु भाषासु साहित्यं सृजति। स च कदाचित् एकस्यां भाषायां रचितं स्वकीयमेव काव्यमन्यस्यां भाषमनुवदति। यथा – रवीन्द्रनाथेन बङ्गभाषायां विरचितानि स्वकीयानि गीतानि आङ्ग्लायामनूदितानि। अनेन व जनेन संस्कृते रचितानि बहूनि स्वोपज्ञानि काव्यानि कथादिकं वा हिन्द्यामनूदितानि। अनुवादेन मूलं पुनः परिष्क्रियते, मूलं पुनः परिष्कृत्य अनुवादश्च पुनरपि चारुतरः साधयितुं शक्यते।

अनुवादेन मूलरचनाया महिमा वर्धते। मूलरचनाया नवीनमभिज्ञानं प्रत्यभिज्ञानं नवाविष्कारो वा जायते इति सर्वथा अनुवादकर्मणि यतनीयम् साहित्यसाधकैः।

**इति षष्ठोऽध्यायः**

# अथ सप्तमोऽध्यायः

## अनुवादभेदाः

अनुवादप्रयोजनानि प्रतिपादितानि। प्रयोजनापेक्षया नानाभेदा अनुवादस्यभवितुमर्हन्ति। तथाहि –

**व्यावहारिक-प्रातिभासिक-पारमार्थिकेति तस्य त्रैविध्यम्। (७.१)**

अस्माकम् ऋषीणां दर्शने प्रत्येकं वस्तुनः त्रिविधं रूपं भवति – आधिभौतिकम्, आधिदैविकम् आध्यात्मिकं च। अनुवादस्यापि एवमेव आधिभौतिकाधिदैविकाध्यात्मिकभेदेषु त्रैविध्यम्। एते च त्रयोऽपि भेदा उत्तरोत्तरं व्यापकाः, आधिभौतिकाद् आधिदैविकं व्यापकं तस्माच्चाध्यात्मिकम्। अथवा वेदान्तदृष्ट्या व्यावहारिकः प्रातिभासिकः पारमार्थिकश्चेति त्रिधाऽनुवादो व्यवस्थापयितुं शक्यः। एतेष्वपि उत्तरोत्तरं गरीयस्त्वम्।

अत्रेदमाकूतम्। लोकव्यवहारे साहित्येषु वा एकस्य कथनमभिप्रायो वाऽन्येन यथावदनूद्यते इति व्यावहारिकोऽनुवादः। तस्मिन् कथने अभिप्राये वा स्वाभिप्रायानुप्रवेशपुरस्सरं कश्चन चमत्कारो विशेषो विकारो वा निधीयते तदा आधिदैविकः प्रातिभासिको वाऽनुवादः। अध्यात्मदृशा तु मानवनिर्मितः समस्तः संसार एवानुवादः। तथाहि - ऐतरेयो महीदासो द्विविधं शिल्पमाह - देवशिल्पं मानुषशिल्पं च।। एतयोः प्रथमो आत्मविस्तृतये अपरश्चात्मसंस्कृतये जायते। इदं सर्वं दृश्यमानं जगत् देवशिल्पम्। अस्य च देवशिल्पस्यानुकृतिर्मानुषशिल्पम्। संसारस्य सर्वे पदार्थाः देवशिल्पमयाः, तेषामनुकृतौ मनुष्या यद् रचयन्ति तत्सर्वं मानुषं शिल्पं भवति। मानुषानि शिल्पानि रचयन् मनुष्यः आत्मनं संस्कुरुते। तद्यथाऽऽह ऐतरेयः –

*देवशिल्पानामनुकृतीह शिल्पमधिगम्यते। हस्ती, कंसो वासो हिरण्यम्, अश्वतरी रथः।*

(ऐतरेयब्रा. ३०.१, तृतीये भागे, पृ. १३१)

एवं गीतमपि द्विविधं देवं च मानुषं च। ऋचो हि नाम दैवानि गीतानि सन्ति, मानुषानि गीतानि सन्ति गाथादयः।[18] ऐतरेयब्राह्मणस्य व्याख्याकारः षड्गुरुशिष्यः अनुकृतिमाटीकते तदनुसारेणेति (तस्य देवशिल्पस्य अनुसारेणेति)।

**व्यावहारिकप्रातिभासिकपारमार्थिकानामनुवादानां प्रसङ्ग-देश-कालाद्यानुरोधेन नानात्वम्।** (७.२)

एते व्यावहारिकप्रातिभासिकपारमार्थिका येऽनुवादा उक्तास्तेषामपि अवस्थादेश -कालादिभेदान्नानात्वं भवति। तथाहि -

१. शाब्दिकोऽनुवादः
२.भावानुवादः
३.व्याख्यानात्मकोनुऽवादः
४. सारात्मकोऽनुवादः
५. पुनःसृष्टिपरको वाऽनुवादः
६.स्वाभिनिवेशपूर्णोऽनुवादः विकृतानुवादो वा
७. नवसर्जनमूलकानुवादः
८. अनुवादस्यानुवादः

**शाब्दिकोऽनुवादः**

शब्दशो विहितोऽनुवादः शाब्दिकः। आङ्ग्लायमयं लिट्रल ट्रांसलेशन (Literal translation अथवा verbal translation ) इति निगद्यते। शाब्दिकेऽनुवादे कोशव्याकरणादि दृष्ट्या एकस्या भाषाया कृतिः वचनावलिर्वा अपरस्यां भाषायां प्रतिपदं प्रतिवाक्यं यथावत् प्रस्तूयते। शास्त्रीयवाङ्मयस्य वैज्ञानिकसाहित्यस्य वा अनुवादेषु अस्य उपादेयता सर्वथा भवति। मूलकृतेः प्रामाणिकताया रक्षणे अस्य स्वारस्यं भवति। काव्यानामपि छात्राणां सुखबोधाय पाठकानां जिज्ञासातर्पणाय च शाब्दिकोऽनुवादो विधीयते। तद्यथा मम *सेवाग्रामे* इति काव्यस्य स्वोपज्ञो हिन्दीभाषानुवादः –

पश्यन्त्वार्या अवहितदृशा त्वस्ति बापोः कुटीयं
द्रोणी सैषा प्रतिदिनमसौ स्नाति यस्यां महात्मा।

[18] ऐत.ब्रा. 7।8

कामं नेयं मसृणमसृणा नापि शुभ्राच्छवर्णा
देशे स्वीये कठिनकठिना निर्मिता चायसा वै।
इति मूलकाव्यस्याद्यां पद्यम्। हिन्दीभाषानुवादश्चेत्थम्-
ध्यान से देखें आप लोग, यह बापू की कुटी इधर रही
महात्मा जी इसमें नहाते थे प्रतिदिन, वह टब है यही
भले न हो चिकना चमकीला और शुभ्र, लोहे का ढाँचा है
और मजबूत बहुत है, देश में अपने ही बना हुआ है।
अन्यच्चापि तत्रैवाग्रे -
द्रोणीमन्यां परमरुचिरां चाथ वैदेशिकीं तां
सोत्साहं यां समुपहृतवान् श्रेष्ठिवर्यो बजाजः।
अस्याः कार्यं किमिह यदि नो निर्मितेयं स्वदेशे
रुष्टो बापुस्त्वलमिति परावर्तयामास तां सः।
अस्य हिन्द्यनुवाद इत्थम्-
एक और टब था जिसको विदेश से मँगवा कर
सेठ बजाज ने बापू को भेंट किया उत्साहित हो कर
यह तो अपने देश में नहीं बना – इससे करना क्या
चिढ़ कर बोले थे बापू, और वह टब लौटा दिया।
एवमेव अन्यत्रापि ऊह्यम्।

**भावानुवादः**

भावानुवादः काव्यानामेव स्यात्, न शास्त्राणाम्। अत्र कवेर्मूलभावानां रक्षणाय क्वचित् तदीयाः शब्दाः परिवर्त्यन्ते, वाक्यविन्यासोऽन्यथा विधीयते। भावानुवादस्य कर्ता स्वयमपि सुकविः स्यात्। क्वचित्तु तदीया प्रतिभा मूलकाव्यकर्तुः प्रतिभायास्तुलामधिरोहति, तदा स्वर्णे सुमनसामामोद इव उभयप्रतिभयोः संयोगो जायते। यथा ओमरखय्यामस्य रुबाई-च्छन्दसा नाना कविभिर्विहिता अनुवादाः। ओमर खय्यामस्य कविता रुबाई इति छन्दसि पारसीकभाषायां रचिता। रुबाई इति मुक्तकम्, अस्मिन् छन्दसि संस्कृतच्छन्दःस्विव भवन्ति चत्वारः पादाः।

भावपूर्णेऽनुवादेऽनुवादकः प्रतिशब्दं प्रतिपङ्क्ति अनुवादं न करोति, समग्रं भावं कवेरभिप्रायं वा स्वभाषया रमणीयं प्रस्तौति। तेन मूलरचना रूपान्तरं प्राप्नोति। ओमरखय्यामस्य प्रथमं छन्दो वर्तते -

आमद सहरी निदा ज़े-मैख़ान:-ए-मा क्,ऐ
रिंद-ए-ख़राबाती-ओ-दीवानः-ए-मा
बर-ख़ीज कि पुर कुनीम पैमानः ज़े-मय ज़्,
आन् पीश कि पुर कुनंद पैमानः-ए-मा

अस्य शब्दशोऽनुवाद इत्थं कर्तुं शक्यम्-
एकदा प्रातर्मम कर्णयोरयं ध्वनिर्जुगुञ्ज- अयि उन्मत्तक! अयि सुरालोलुप! उत्तिष्ठ! एहि, वयं परमेश्वरस्य प्रेम्णा परिपूरितं चषकं ओष्ठेन चुम्बामः, येन जीवनस्य चषकः पूर्येत। इत्थं च मृत्योरागमनात्प्रागेव वयं तेन रमामः।
अस्य रुबाईच्छन्दसोऽनुवादो फिट्जेराल्डवर्येणेत्थं व्यधायि

Wake for the Sun, who scattered into flight
The stars before him from the field of night,
Drives night along with them from heaven and strikes
The Sultan’s Turret with a Shaft of light.

Before the phantom of false morning died
Me thought a voice within the tavern cried
When all the temple is prepared within
Why nods the drowsy worshipper outside?

Awake for a morning in bow of night,
Has flung the stone that puts the stars to flight,
And lot the hunter of the east has caught
The Sultan’s Turret in a noose of light.”

हिन्दीभाषायाः प्रख्यातः कवि सुमित्रानन्दनपन्तः १९२९तमे ई.वर्षे ओमरखय्यामस्य रुबाईच्छन्दसां अनुवादं व्यदधात्। अनुवादोऽयं

साक्षान्मूलपारसीकभाषाया विहितः, किन्तु फिट्जेराल्डविहितस्य अनुवादस्यापि उपयोगः पन्तेन विहितः। स्वानुवादप्रक्रियामधिकृत्य तेन व्यलेखि

*फिट्जेरल्ड का कल्पना-सौंदर्य अपना है, भाव उमर के। इसी का अनुसरण मैंने भी अपने इस चपल प्रयास में किया है। इसलिये बुलबुल के साथ कोयल के स्वर और गुलाब के साथ आम्रमंजरी की गंध भी इन स्वप्न-मदभरे गीतों में सहज ही मिल गयी है।*

(फिट्जेरल्डस्य कल्पना-सौन्दर्यं तस्य स्वकीयमेव, भावास्तु उमरस्य तत्र सन्ति। तस्यैवानुसरणं मयाऽस्मिन् चपले प्रयासे विहितः। अत एव बुलबुलपक्षिणः कूजनेन सह पुंस्कोकिलस्य काकली, पाटलपुष्णसौरभेण सह आम्रमञ्जर्याः सुवासोऽपि सहजं सम्मिश्रितो मदीये अनुवादे।)

उपरिलिखतस्य छन्दसोनुवादः पन्तेन इत्थं विहितः

खोलकर मदिरालय का द्वार
प्रात ही कोई उठा पुकार
मुग्ध श्रवणों में मधु रव घोल,
जाग उन्मद मदिरा के छात्र!
ढुलक कर यौवन मधु अनमोल
रोष रह जाये नहीं मृदु मात्र,
ढाल जीवन मदिरा जी खोल
लबालब भर ले उर का पात्र।'

अथ चानेकैः हिन्दीकविभिः फिट्जेराल्डमुपजीव्य उमरो हिन्दीभाषायामनूदितः। अनूदितानुवादविधायकेषु सन्ति बहवो यशस्विनो हिन्दी कवयः राष्ट्रकविमैथिलीशरणगुप्त-केशवप्रसादपाठक-बलदेवप्रसादमिश्र-हरिवंशरायबच्चन-प्रभृतयः। तत्र बच्चनकवेरनुवादो कामपि लोकप्रयितां भेजे। एवमेकस्या एव कृतेरनुवादपरम्परायामनुवादकानां भावग्रहणे अभिव्यक्तौ च भूयान् भेदः। तथाहि फिट्जेराल्डस्य प्रथमं छन्दो बच्चेनेनेत्थमनूच्यते –

उषा ने ले अँगड़ाई, हाथ
दिये जब नभ की ओर पसार,
स्वप्न में मदिरालय के बीच
सुनी तब मैंने एक पुकार-
उठो, मेरे शिशुओ नादान,
बुझा लो पी-पी मदिरा भूख,
नहीं तो तन-प्याली की शीघ्र
जायेगी जीवन-मदिरा सूख।'

अत्र अनुवादकस्य मनोवृत्ति कल्पना च अनुवादे अनुस्यूता। अस्यैव छन्दसः केशवदप्रसाद-पाठकेन इत्थमनुवादो विहितः -

अँगड़ाता था अरुण खड़ा, जब बढ़ा वाम कर अम्बर में
मुझे सुन पड़ा स्वप्न-राज्य में तब यह स्वर मदिराघर में
'व्यर्थ सूखने के पहले ही जीवन प्याली में हाला
जाग जाग, अय मेरे शिशु-दल, ढाल ढाल मधु पी प्याला'

केशवप्रसादमिश्रः पण्डितः आचार्यश्च। तदीये अनुवादे यः परिष्कारःसञ्जातस्तेन भावजगदेव परिवर्तितम्। बच्चनस्यानुवादे चपलता  विलसति अत्र कूक्षता तथा च गाम्भीर्यं व्याप्नोति, मदिरापानाय मधुरः सुकुमारोऽनुरोध आदेशे पर्यवसितः। एतदेव काव्यं मैथिलीशरणगुप्तेन अन्यथैव अनूदितम्

वाम-कनक-कर ने उषा के
जब पहला प्रकाश डाला,
सुना स्वप्न में मैने सहसा
गूँज उठी यों मधुशाला-
'उठो,उठो, ओ मेरे बच्चो,
पात्र भरो, न विलम्ब करो,
सूख न जावे जीवन-हाला,

रह जावे रीता प्याला।'

अन्येनानुवादेन रघुवंशलालगुप्तेन तु विषयपरिवर्तनमपि मनाङ् विहितम्। मूले स्वप्नाविष्टः कविर्यां वाणीं शृणुते, सा तेन साक्षान्मधुबालाया मुख एव विन्यस्ता -

पौ फटते ही मधुशाला में, गूँजा शब्द निराला एक,
मधुबाला से हँस-हँसकर यों कहता था मतवाला एक-
स्वाँग बहुत है रात रही पर थोड़ी, ढालो ढालो शीघ्र
जीवन ढल जाने के पहले ढालो मधु का प्याला एक।'

अयं उपरि सूचितेषु अनुवादभेदेषु स्वाभिनिवेशपूर्णोऽनुवादः विकृतानुवादो वा।

वस्तुत एतेषु अनुवादभेदेषु ऐकान्तिकत्वं नास्ति। शाब्दिकोऽनुवादः भावपूर्णोऽपि भवितुमर्हति, भावपूर्णोऽनुवादः क्वचित् पुनःसृष्टिमूलोऽपि सञ्जायते, यथा उपरि उद्धृतः फिट्जेराल्डस्य अनुवादः। अनुवादः शाब्दिकः सन्नपि भावपूर्णो भवेत्,तदा स्वर्णे सुगन्ध इव सञ्जायते। प्रतिभाराय- वर्याया *याज्ञसेनी* इत्युपन्यासः तस्या एव कथानिकाश्च *उल्लङ्घनम्* इति पुस्तके भागीरथिनन्देनूदिताः। नन्दस्यानुवादाः शाब्दिकाः सन्तोऽप्यानन्ददायिनः भावपूर्णा वा। कृष्णद्रौपद्यौः सम्बन्धस्य अनिर्वाच्यता सूक्ष्मता च तत्रेत्थं निरूपिता –

*आकाशस्य यथादिर्नास्ति, अन्तोऽपि नास्ति, समुद्रस्य यथा न वृद्धिर्न क्षयः, सूर्यस्य यथा नोदयो नास्तमयः, मनःकामनाया यथा न पूर्णता, न च शून्यता, तथैवावयोः सम्बन्धस्य नास्ति संज्ञा न चोपसंहारः। (* याज्ञसेनी, *पृ. १)*

**सारात्मकोऽनुवादः**

क्वचित्तु मूलरचनायाः महदाकारं वीक्ष्यं सौकर्याय वा तस्या सम्पूर्णमनुवादंकर्तुमशक्नुवानो वा अनुवादकस्तस्या सारात्मकमनुवादं विधत्ते। शेक्सपीयरस्य रूपकाणां संक्षिप्तसंस्कृतरूपान्तराणि नैकैः कविभिर्विहितानि।

कादम्बरीतिरुमलाचार्येण शेक्सपीयरस्य *कामेडी आफ इरर्स* इति नाटकं *भ्रान्तिविलासः* इति नाम्ना गद्ये कथाकथनरीत्या प्रस्तुतम्। बङ्गभाषायाः गणदेवता इति ताराशङ्करवन्द्योपाध्यायस्य अत्यन्तं बृहदाकारो वर्तते उपन्यासः। तस्य सङ्क्षिप्तोऽनुवादः आद्याचरणझावर्येण विहितः।

**पुनःसृष्टिमूलकोऽनुवादः**

औमरखय्यामस्य रुबाईच्छन्दसां फिट्ज़ेराल्डमहोदयेन विहितोऽनुवादो क्वचिद् भावपूर्ण-, क्वचिच् एतस्यां कोटौ परापतति। अस्य फिट्ज़ेराल्डीयानुवादस्य कारणात् ओमरख्य्यामो संसारे महीयते।

फिट्ज़ेराल्डः स्वयमपि तथ्यमिदं स्वीचकार यन्न मया ओमरखैय्यामस्य प्रतिपङ्क्तिरनुवादः कृतः, तत्र स्वातन्त्र्यमवलम्बितम्। तत्र मूलरचनायाश्छन्दसां क्रमोऽ पि तेन परिवर्तितः, क्वचित् तु तस्यानुवादस्य मूलं क्व वर्तते खय्यामरचनायामित्यपि अनुसन्धातुं न शक्यते। स्वकृतेऽनुवादे रूपान्तरे वाऽसौ मुहुर्मुहुः परिवर्तनं व्यधात्। तदीयानुवादस्य प्रथमं संस्करणं १८५९तमे ई.वर्षे द्वितीयश्च १८८९तमे वर्षे प्रकाशितः। उभयोः संस्करणयोः एकस्यैव छन्दसो रूपान्तरमुदाह्रियते –

Here with a loaf of bread beneath the bough
A flask of wine a book of verse, and thou
Before me singing in the wilderness
And Wilderness is paradise now.

इदं प्रथमसंस्करणे एकादशँ छन्दः। १८८९तमे वर्षे प्रकाशिते द्वितीयसंस्करणे एतदेव द्वादशं छन्दः। तदित्थं च -

A book of verses underneath the bough
A Jug of vine, a Loaf of Bread – and Thou
Beside me singing in Wilderness –
Oh, Wilderness were paradise now!

अयमपरो विशेषः क्वचिद् भवति पुनःसृष्टिमूलकेषु अनुवादेषु यत्तेषु अनुवादकः स्वदेशस्य परम्परानुरूपं स्वरुचेः संस्कारानुरूपं वा

पात्राणां नामानि कथाप्रसङ्गांश्च परिवर्तयति। ए. आर. राजराजवर्मा कोइत्तंपुरानेन ( 1863- 1918 ई.) शेक्सपीयरस्य ओथेलोनाटकं *उद्दालचरितम्* इति नाम्ना रूपान्तरितम्। आचार्येण रेवाप्रसादद्विवेदिना रोमियो एण्ड जूलियट् इति नाटिका यूथिकेति शीर्षकेण प्रस्तुन्वता तस्यां भारतीयसंस्कारानुरूपं प्रचुरं परिवर्तनमपि विहितम्। कृष्णमाचार्येण *मिडसमर नाइट्स ड्रीम* इति रूपकस्य *वासन्तिकस्वप्नम्* इति नाम्ना स्वतन्त्रं रूपातरं व्याधायि।

**व्याख्यात्मकोऽनुवादः, अनुवादेषु तारतम्यं च**

व्याख्यात्मकेनुवादे मूलकृतेः निहितार्थाः व्यङ्ग्या अपि उद्घाट्यन्ते। स्वाभिनिवेशमूलकेनुवादेनुवादकः स्वाशयं अनपेक्षितं निवेशयति। कवेरनभिमतं वा किमपि अन्यथा वस्तु योजयति। मेघदूतीयप्रथमपद्यस्यानुवादाः एतयोरनुवादभेदयोरुदाहरणतया प्रस्तूयन्ते।

कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तङ्.गमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।।1।।

हिन्दी भाषया अस्य शाब्दिकः अनुवाद इत्थं स्यात्

प्रिया के विरह के कारण गुरु (भारी) एक वर्ष तक भोग्य स्वामी के शाप के द्वारा जिसकी महिमा अस्त हो गई थी, जिसने अपने कर्त्तव्य में प्रमाद (असावधानी) की थी ऐसे यक्ष ने सीता के स्नान से पवित्र जल वाले, चिकनी छायादार पेड़ों वाले रामगिरि के आश्रमों में निवास किया।

अनेनानुवादेन मूलरचनाया आस्वादो न भवति, न वा तद्गतं सौन्दर्यमनुभूयते। भावपूर्णानुवादे अयमास्वाद सम्भाव्यते। मेघदूतप्रथमपद्यस्य आचार्यकेशवप्रसादमिश्रकृतः अनुवादो विभाव्यताम् –

धनपति ने सेवा से बेसुध एक यक्ष पर कोप किया,

उसे वर्ष भर प्रिया-विरह् का कारण दूभर शाप दिया।
तब निरस्त हो उसने डेरे रम्य रामगिरि पर डाले,
जो सीता-मज्जन से शुचि जल और घनी छायावाले।।

एतस्मिन् अनुवादे मूलरचनाया प्रतिपदं प्रतिचरणम् अवतरणं तु न जातम्, परन्तु कालिदासीयभावजगत् साधु अभिव्यानक् अनुवादकः।

अस्यैव पद्यस्य व्याख्यात्मकः पुनःसृष्टिपरको वानुवादो यथा ममैव -

कोई एक यक्ष था।वह कुबेर का चाकर
चूक चाकरी में कर बैठा कभी। रिसा कर
उसको तब अपनी बस्ती से देसनिकाला
धनपति ने था एक वर्ष के हित दे डाला
पहला दुख बिछोह् का इसी शाप से जाना
अपने घर से दूर अकेले जो था जाना
महिमा अस्त शाप ने कर दी, था मन टूटा
रहा रामगिरि जा कर। साथ बन्धु का छूटा
माता सीता कभी नहाई उन घाटों पर
वहाँ कई थे नदियाँ, नाले, सरवर, पोखर
पावन था जिनका जल। थी पेड़ों की छाया
घनी और शीतल, प्रिय। ऐसा वह गिरि, वह् वन
उसके आश्रम......बने यक्ष के आश्रय पावन।

मूल पद्यस्य चतुर्णां पादानामनुवादः रोलाच्छन्दसि सानेट् विधायां चतुर्दशसु पादेषु अनुवादकेन विहितः। केचन कालिदासीया आशया अत्र उद्घाटिताः क्वचित् व्याख्याऽपि योजिता। मूले शापः कान्ताविरहगुरुरुक्तः। गुरुः आचार्य इति अन्यमर्थं गृहीत्वा अनुवादकेन यथा गुरुः शिक्षयति, तथैव विरहदुःखं कीदृशमिति गुरुः शापः यक्षं शिक्षितवानिति आशयोऽपि स्फोरितः।

स्वाभिनिवेशपूर्णे अनुवादे अनुवादकः स्वाभिमतेन विमत्या वा विकृतिमापादयति। तद्यथा

प्रेम रंगों में रंगा यक्ष च्युत, हो कोई जब अपने आप।
क्रोध-अग्नि प्रज्वलित हुई तब, धन कुबेर का बनकर शाप।।
रामगिरी के आश्रम आश्रय पा, निर्वासित बिताया साल।
सीता के स्नानों से पुलकित, छाया में बीता विरही ज्वाल।।

अस्मिन् अनुवादे यक्षस्य कृते प्रेम रंगों में रंगा तथा 'अपने आप' इति विशेषणे कुबेरस्य कृते च क्रोध अग्नि प्रज्जवलित हुई तब इत्येते शब्दा अनावश्यकाः। तृतीये चरणे' निर्वासित बिताया साल' इति कथनं तु सर्वथा भ्रान्तिजनकम्, अग्रिमे एव श्लोके नीत्वा कतिचिन्मासान् अन्यत्र च शेषान् मासान् गमय चतुरो इत्यादि कालिदासोक्तिभिः विरोधात्।

मेघदूतस्य द्वितीयः श्लोकः

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ।।2।।

हिन्दीभाषायैमस्य शाब्दिकोऽनुवाद एवं स्यात् -

अबला से बिछड़े तथा स्वर्णवलय गिर जाने से रिक्त कलाई वाले कामी ने उस पहाड़ पर कुछ महीने बिताने के बाद आषाढ के पहले दिन शिखर पर टिके, ढूसा मारने के लिये झुके हाथी के समान दर्शनीय बादल को देखा।

आचार्य केशव प्रसादमिश्रकृतो भावपूर्णोSनुवादः

उसी शैल पर उस विरही का आठ मास रोते बीता,
कृश होने से कञ्चन-कंकण गिरकर हाथ हुआ रीता।
अब असाढ़ आते ही उसने चोटी पर बादल देखा,
क्रीड़ा में झुक ढूह ढाहते हाथी सा उसको लेखा।।

'आठ मास रोते बीता' तथा कृश होने से कञ्चन-कंकण गिरकर हाथ हुआ रीता इत्यादिकथनानि अनुवादकेन भावसौन्दर्याभिवृद्धये योजितानि। तानि च कालिदासीयमाशयं विशदयन्ति।

अस्यैव व्याख्यात्मकोनुवादो यथा मम -

निपट अकेला वह यों रहा। महीनों झेला
सन्नाटे का बोझ, लगा कर भीतर मेला
अपने उलझे सपनों का। बूझ भी न पाया
सोने का कंगन कब गिरा, कलाई छूछी
कब हो गयी....ध्यान भी इसका उसे न आया
बना बावला जब से बिछुड़ी अबला उसकी ।
ऐसे में असाढ़ का पहला दिन फिर आया
घुमड़ा कोई बादल ऊपर,फिर झुक आया
नीचे, चोटी पर पहाड़ की ठहरा आ कर
सटा हुआ था वह लपेट कर गिरि को कस कर
जैसे शीश झुका कर हाथी कोई वनचर
ढूसा मार रहा हो चट्टानों पर बन कर
खेल खेल में मतवाला। था दर्शनीय घन
लगा यक्ष को......आया यह कोई अपना जन।

अत्र प्रथमपादद्वयमनुवादकेन स्वमत्यैव कविगतस्याभिप्रायस्य व्याख्यानाय समायोजि। 'कनकवलयभ्रंशरिक्तप्रकोष्ठः'- इति मूले यक्षस्य विशेषणम्। तस्य व्याख्यायां 'बूझ भी न पाया/ सोने का कंगन कब गिरा कलाई छूछी/कब हो गई-ध्यान भी इसका उसे न आया'। इति विस्तारो व्यधायि। 'अबलाविप्रयुक्त' इति पदमपि एवमेव विशदीकृतम्। कालिदासेन मेघ 'आश्लिष्टसानु'रिति वर्णितः।' एतद्व्याख्याने अनुवादकेन पादद्वयं पूरितम्।

झुक आया
नीचे, चोटी पर पहाड़ की ठहरा आ कर

सटा हुआ था, वह लपेट कर गिरि को कस कर

तथा च 'लगा यक्ष को आया यह कोई अपना जन' इति कथनं स्वमत्या अतिरिक्तं निवेशितम्। परन्तु तदपि मूलरचनाया भावजगत् समेधयति सम्पन्नतरं च तद्विदधाति।

अस्य पद्यस्य स्वाभिनिवेशपूर्णोनुवादः श्रुतिवन्तदुबेवर्यस्य इत्थम्–

प्रिया याद में धीरे-धीरे, यक्ष हुआ अति व्याकुल निर्बल।
प्राण त्राण निष्पन्द कलाई, कंगन गिरते ढीले खुल-खुल।।
पावस ऋतु के पहले बादल, काम भरे जब मंड़राए।
दर्शनीय उन्मत्त गजों-से, शैल तोड़ते घिर आए।।

अत्र 'निस्पंद कलाई' कंगन गिरते ढीले खुल खुल' तथा च मेघस्य कृते 'काम भरे' इत्यादिपदानि मूलेन असमञ्जसानि। यक्षस्य कनकवलयस्तु एकदैव सहसा क्वचित् तस्याविज्ञातं विनिपतितः, तस्य पुनः पुनः विघट्य विघट्य पतनं यद्वर्णितं, तदर्थस्यानर्थकर एव। एवमेव मेघदूत एक एव मेघः, तदपाकृत्य अनुवादकेन स्वैरं बहवो मेघा अवतार्य तैः पर्वतभेदनमेव कारितमिति अहो स्वैरिता।

**नवसर्जनमूलकानुवादः**

क्वचित्तु मूलकाव्यं स्वप्रतिभया नवीकृत्य नवीनविधया नवीनरीत्या अनुवादकः प्रस्तौति। उपरिचर्चितस्यय मेघदूतीयपद्यस्य अनुवादो महाकविना महादेवीवर्मणा गीतविधया व्यधायि। तेन अनुवादे विधापरिवर्तनात् नवोन्मेषइव समजनि। तथाहि

आषाढ़ मास का प्रथम दिवस आया!
ज्यों गजेंद्र क्रीड़ा में तन्मय, टकराता टीलों से निर्भय,
शैल शिखर संलग्न मेघ वैसे ही घिर छाया।
आषाढ़ मास का प्रथम दिवस आया।
स्नेह जगा देने वाले के, सम्मुख हो बादल काले से,
रोक आँसुओं को कुबेर का अनुचर अकुलाया।
आषाढ़ मास का प्रथम दिवस आया।

पुनःसृष्टिमूलकेऽनुवादे मूलानुसारिता न त्यज्यते, अत्र तु मूलं कल्पनाविमानस्य उड्डयनाय केवलं धावनभूमिः (run way) सञ्जायते।

**अनुवादस्यानुवादः**

पूर्वं फोर्ष्टरमहोदयस्य आङ्ग्लानुवादोपजिवितः शाकुन्तलानुवादोऽस्य उदाहरणम्। *जोनाथन् लिविंस्टन् सीगल्* इत्याख्या भावपूर्णा प्रतीककथा गुजरातीभाषानुवादमवलम्ब्य *सागरविहङ्गमः* (2006) इति नाम्ना कल्याणकीर्तिविजयेति मुनित्रयी संस्कृतेऽनूदितवती। अनेनैव मुनित्रयेण हर्मनहेसस्य सुप्रसिद्ध उपन्यासः उपन्यास *सिद्धार्थ* इत्यभिधः अनूदितः।

ममैव रूमीरहस्यम् रूमीपञ्चशीति अनूदितं पुस्तकद्वयं महाकवेः रूमिणः काव्यानां कथानां चानुवादान् प्रस्तौति, नैते अनुवादाः साक्षात् पारसीकभाषाया विहिताः,अपितु मूलकृतीनां आङ्ग्लानुवादेभ्यो विहिताः।

**विधादृष्ट्याभेदाः**

विधादृष्ट्या पद्यस्य गद्ये, गद्यस्य पद्ये, नाट्यस्य कथायामिति नाना भेदाः भवन्ति। अर्धकथानकम् बनारसीदासस्य कथा वर्तते। इयं तुलसीदासस्य रामचरितमानसमिव दोहा-चौपाई-प्रभतिषु छन्दःसु गुम्फिता। अनेन जनेन अस्याः संस्कृतग्रन्थे मूलानुसारी अनुवादो व्यधायि।

**अनुवादपरिष्कारः**

अनुवादकर्ता मूलरचनां भावं भावं पाठं पाठं अनुवादकर्मणि प्रवृत्तः अनुकूलपदानि चिनुयात्, मूलरचननायाः प्रत्येकं पदस्य अनुवादकस्य भाषायां भवेयुर्बहवः पर्यायाः, तेषु कतमो मूलरचनाया आशयं व्यनक्तीति स विचारयेत्। भवन्ति चात्र श्लोकाः

**आधानोद्धरणे यावद् यावद् दोलायते मनः।**
**तावदेवानुवादस्य प्रक्रिया शिथिलायते।**
**यत्नतः प्रत्यभिज्ञेयं मूलग्रन्थे पदम् पदम्।**
**पदे पदेऽन्यथा स्याद्वै स्खलनं तु मुहुर्मुहुः।।**
**मूलभाषापदानां च ज्ञात्वा मर्म यथाविधि।**

**स्वभाषायां च भवेत् तेषां पर्याया अपि कीदृशाः।**
**पदस्य स्थापिते स्थैर्येऽनुवादो याति पूर्णताम्।**
**परिपूर्णेऽनुवादे स्यान्ननु सिद्धा सरस्वती।।**

**अनुवादस्य समस्याः**

अनुवादो हि नाम असम्भवं कार्यमिति आमनन्ति अनुवादविशेषज्ञाः। परिवृत्त्यासहानि भवन्ति महाकवीनां पदानि, एकस्याः भाषायाः आभाणकाः प्रोक्तय उक्तिप्रकारा अपरस्यां भाषायां आनेतुं सर्वथा सर्वदा च न शक्यन्ते।

प्रत्येकं भाषायाः विशिष्टैव संस्कृतिर्भवति। सत्यपि प्रदातृगृहीतृभाषयोः साम्ये अनुवादे संस्कृतिद्वयं सङ्गमं विदधाति, अयं सङ्गमो हृद्यः स्यादिति अनुवादकेन यतनीयम्।

वस्तुतः अनुवादकर्म क्वचित् नीचैः प्रवहमाणस्य जलस्य धाराया प्रवाहम् उपरि नयनस्य प्रयास इव भवति दुष्करम्। तद्यथोक्तं सुकविना गोवर्धनाचार्येण -

वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता।
निम्नानुरूपनीरा कलिन्दकन्येव गगनतलम्।। (आर्यासप्तशती, ५२)

क्वचित्तु एकस्य वाक्यस्यापि अपरभाषायामनुवादो भवति दुष्करः। संस्कृतभाषायां संस्कृतेर्ये विशेषाः लसितास्ते अन्यस्यां भाषायां सहजमानेतुं न शक्यन्ते। तथाहि - शाकुन्तले दुष्यन्तः शकुन्तलां पृच्छति – अपि तपो वर्धते? हिन्दीभाषायामस्य वाक्यस्य शब्दशः अनुवाद इत्थं स्यात् -- 'क्या तपस्या बढ रही है'? परमनेनानुवादेन दुष्यन्तस्य प्रश्न एवावगतार्थो न भवति। 'तुम्हारी तपस्या तो अच्छी तरह चल रही है न?' इति कथनेन मनाक् स्फुटिताशयोऽनुवादो भवितुमर्हति। परन्तु तत्रापि सन्ति समस्याः। वक्ता केनाभिप्रायेण एतादृशं प्रश्नं विधत्त इति न ज्ञायते। अनुवादवाक्यं हिन्दीभाषाया प्रकृतेरनुकूलं नास्ति। वस्तुतः दुष्यन्तेन कुशलप्रश्नः कृतः। हिन्दीभाषायां क्वचिदपि एतादृशः कुशलप्रश्नो न भवति। अत एव

दुष्यन्तस्येतद्वचनम् हिन्दीभाषाप्रकृत्यनुकूलमित्थमनुवक्तुमर्हम् – 'कैसी हैं आप?' इति।

वस्तुतो दुष्यन्तस्य प्रश्ने नर्मगर्भं विडम्बनमपि महाकविना सन्निधापितम्। यतो यादृशः वनज्योत्स्नासहकारयोर्व्याजेन प्रीतिपरायण आलापः शकुन्तलाया प्रियंवदायाश्च दुष्यन्तेन श्रुतः, तं मनसि धृत्वा स कीदृशं तपश्चरण भवत्या इति उत्प्रासम् एतस्मिन् प्रश्ने निधापयति।

क्वचित्तु अन्विष्यान्विष्यापि न लभ्यन्ते मूलभाषायाः विशिष्टानां पदानामभिव्यक्तीनां वा आशयस्य प्रकटीकरणक्षमाणि पदानि। तथाहि जयशङ्करप्रसादस्य आँसू (अश्रु) इति खण्डकाव्यस्य इयं पङ्क्तिर्विद्यते

परिरम्भकुम्भ की मदिरा निःश्वासमलय के झोंके।
मुखचंद्र चाँदनी जल से मैं उठता था मुँह धोके।

इत्यस्य काव्यस्य द्विवेदिवर्येण विहिते -

आश्लेषकुम्भमद्यं च निःश्वासाः मलयानिलाः।
मुखेन्दुचन्द्रिकातोये मुखं प्रक्षाल्य चोत्थितः।।[19]

इति अनुवादे झोंके इति पदस्यानुवादः संस्कृते दुष्करः।

## इति सप्तमोऽध्यायः

[19] अश्रु 56 संस्कृतप्रतिभा उन्मेषा 48-49, पृ. 222

# अथ अष्टमोऽध्यायः
## दोषगुणविचारः

यथा काव्ये दोषास्तथैव अनुवादे दोषाः भवन्ति। तान् दूरयितुमनुवादको यतेत। ते च दोषा नानाविधाः भवन्ति। तद्यथा –

**पद-पदार्थ-वाक्य-वाक्यार्थ-अर्थान्तराशयाग्रहणादि भेदैः अनुवाददोषाणां नानात्वम्। (८.१)**

दिङ्मात्रनिदर्शनार्थं केचन दोषा गण्यन्ते

१. अधिकपदत्वम्

मूले अप्रयुक्तं पदमनुवादकः अनपेक्षितं निवेशयति। तद्यथा आँसूकाव्यस्यानुवादे-

बस गई एक बस्ती है स्मृतियों की इसी हृदय में।
नक्षत्रलोक फैला है जैसे इस नील निलय में।।

इति आँसू-काव्यस्य द्विवेदिवर्येण विहितेऽनुवादे -

स्मृतीनां वसतिर्जाता तथैव हृदये मम।
नक्षत्राणां यथा लोकः सुनीले गगने महान्।।[20]

अत्र महान् इति पदं मूले नास्ति, तदनुवादे अधिकम्।

**२. न्यूनपदत्वम्**

आँसूकाव्यस्यैव --

मेरे क्रन्दन में बजती क्या वीणा, जो सुनते हो।
धागों से इन आँसू के निज करुणापट बुनते हो।।

अस्यानुवादः -

त्वया वीणाध्वनिः किं वा श्रूयते मम रोदने।
यदश्रुसूत्रमादाय निर्मासि करुणापटम्।।[21]

अत्र बजती इति मूलस्थं पदं नानूदितम् इति न्यूनपदत्वम्।

---

[20] अश्रु 6 संस्कृतप्रतिभा उन्मेषा 48-49, पृ. 217

[21] अश्रु 21 संस्कृतप्रतिभा उन्मेषा 48-49, पृ. 219

### ३. मूलकृतेः भाषागतसौन्दर्यस्याग्रहणम्

क्वचित्तु सत्यपि द्वयोः भाषयोरतितरां नैकट्ये, सत्यपि च मूलकवितदनुवादकयोः सामञ्जस्ये मूलभाषायाः स्वकीया आभाणकाः तद्गताश्च प्रोक्तयः अनुवादभाषायां नावतरन्ति। आँसूकाव्यस्यैव प्रसिद्धेयं पङ्क्तिः

पतझर था झाड़ खड़े थे सूखी सी फुलवारी में
किसलय नवकुसुम बिछा कर आये तुम इस क्यारी में।

प्रेमनारायणद्विवेदिवर्येणास्यानुवाद एवं कृतः

निष्पर्णाः संस्थिता वृक्षाः शुष्काऽऽसीत् पुष्पवाटिका।
त्वमागतः समास्तीर्य प्ररोहान् कुसुमानि च।।[22]

अत्र पतझर इति पदं संस्कृतानुवादे त्यक्तम्, झाड़ इति पदमपि मूले यादृशमनुभवं जनयति, तादृशः निष्पर्णैर्वृक्षैर्जनयितुं न शक्यते। द्वितीयपङ्क्तिरपि अनुवादे न समग्रमवतीर्णा, किसलयस्यानुवादः प्ररोहो न तथा चारुतां व्यनक्ति, नवकुसुमं त्यक्त्वा छन्दोनुरोधात् अनुवादकेन केवलं कुसुमनि उपात्तानि, तेन अनुवादे न्यूपदत्वदोषोऽपि।

(४) क्लिष्टकल्पनया व्यक्तिः –

अनूदिता रचना मूलरचनाया भावं स्वभाषया अभिव्यञ्जने अशक्नुवाना तां जटलयति। उपरि उद्धृता मेघदूतस्य स्वाभिनिवेशमूलका अनुवादा अत्र उदाहरणम्।

**अनुवादगुणाः**

अनुवादे भरतवामनादिप्रतिपादिताः दश शब्दगुणाः दश अर्थगुणाश्च यथोचितं काम्याः। ते यथा

श्लेषः प्रसादः समता समाधिः माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते।
विस्तरस्तु नाट्यशास्त्रात् काव्यालङ्कारसूत्रवृत्तेश्च वेद्यः।

**इत्यष्टमोऽध्यायः**

---

[22] अश्रु 34 संस्कृतप्रतिभा उन्मेषा 48-49, पृ. 220

# अथ नवमोऽध्यायः
## संस्कृते अनुवादपरम्परा

प्राचीना परम्परा –

संस्कृतसाहित्यपरम्परायां टीकाग्रन्थेषु भाष्ये, वा मूलग्रन्थस्य अनुवादोऽपि भवति, तदनु तस्य व्याख्यानमपि। तथापि आधुनिकदृष्ट्या एतादृश्यष्टीकाः भाष्यानि वा पूर्णतया अनुवादा एवेति वक्तुं न शक्यते।

गुणाढ्यस्य बड्ढकहा (बृहत्कथा) इति ग्रन्थः पैशाचीप्राकृते विरचितः। अयं ग्रन्थः एवं लोकप्रियो जातो यत् संस्कृते, प्राकृते, तमिलभाषायां चास्य षडनुवादाः पञ्चमशतकात् द्वादशशतका यावत् विहिताः। ते सन्ति –

१.दुर्विनीतेनामधेयेन राज्ञा विहितः संस्कृतानुवादः,

२. वसुदेवहिण्डीति नाम्ना (शौरसेनी)-प्राकृते विहितः अनुवादः,

३. तमिलभाषायामनुवादः,

४. बुधस्वामिना बृहत्कथाश्लोकसङ्ग्रहनाम्ना विहितः संस्कृतानुवादः,

५. क्षेमेन्द्रेण बृहत्कथामञ्जरीति नाम्ना विहितः संस्कतानुवादः,

६. सोमदेवेन विहितः कथासरित्सागर इति नाम्ना च संस्कतानुवादः।

कदाचित् अनुवादानां भूयसा प्रचारात् पैशाचीप्राकृतभाषाया एव लोकव्यवहारे प्रचाराभावात् सा बड्ढकहा विलुप्ता। अस्या अनुवादेषु रूपान्तरेषु वा वसुदेवहिण्डी प्राचीनतमा। अयं च बड्ढकहाश्रितः स्वतन्त्रः कथाग्रन्थ इत्यपि वक्तुं शक्यते। तमिलभाषायां बड्ढकथाया अनुवादो द्वितीयशतके समजनीति ज्ञायते। राज्ञा दुर्विनीतेन स्वकीयोऽनुवादः षष्ठेशतके व्यधायि, स च सम्प्रति न लभ्यते। बुधस्वामी अष्टमनवमशतकयोः सम्भूत इत्यनुमीयते, नेपालदेशे च स स्वकीयं बृहत्कथाश्लोकसङ्ग्रहं रचयामास। कविकण्ठाभरणौचित्यविचारचर्चासुवृत्ततिलकादि- प्रबन्धानां समयमातृकादिविविधकाव्यानां च कर्ता महनीयो महाकविः क्षेमेन्द्रः

कश्मीरनृपतेः अनन्तस्य समकालिकः, ९९०-१०६०क्रिस्त्वब्देषु तदीयं जीवनं कृतित्वं च समुल्ललास। तेन १०३७-तमे क्रिस्त्वब्दे बृहत्कथामञ्जरी निर्मितेति तस्यैव कथनाद् ज्ञायते। सोमदेवोऽपि कश्मीरभवः, आ-१०६३- क्रिस्त्वब्दतः आ १०८२-क्रिस्त्वब्दं यावत् स स्वकीयम् अतितरां रमणीयं बृहत्कथारूपान्तरं कथासरित्सागरं नाम निर्ममे।[23]

एते सर्वे ग्रन्थाः आधुनिके प्रचलितेऽर्थे अनुवादाः न सन्ति। बुधस्वामिनः बृहत्कथाश्लोकसङ्ग्रहः समग्रो नोपलभ्यते, अस्य यावानंशः प्राप्तस्तस्मिन् ४५३९- पद्यानि सन्ति। क्षेमेन्द्रस्य रूपान्तरे७६३९-पद्यानि, सोमदेवस्य कथासरित्सागरस्तु सागर इव विशालः, तत्र २१000 पद्यानि विद्यन्ते। तथात्वेऽपि अहं तु केवलं बृहत्कथायाः सङ्क्षेपमेव करोमि इति सोमदेवः स्वग्रन्थस्य उपोद्धाते निगदति।[24] एतेषां ग्रन्थानां नामकरणेऽपि बृहत्कथेति संज्ञा सर्वथा नोपात्ता, श्लोकसङ्ग्रह-मञ्जरीसरित्सागरेतिपदयोजनया अनुवादकाः रूपान्तरकाराः केनाशयेन रूपान्तरनिर्माणे प्रवृत्ता इति सङ्केतोऽवगम्यते। बुधस्वामी-क्षेमेन्द्र-सोमदेवानां सविधे मूलपैशाचीभाषायाः बड्डकहा आसीत्। तथापि सर्वेषु त्रिष्वपि रूपान्तरेषु वर्तते महान् भेदः। क्षेमेन्द्रस्तु पञ्चमं लम्बकं यावदेव मया मूलग्रन्थयोजना अव्याहतं रक्षिता, अनन्तरं च स्वोपज्ञा अपि अंशा योजिता इति स्वयं स्वीकुरुते। सोमदेवोऽपि स्वीयां रूपान्तरयोजनामित्थं विशदयति-

**यथामूलं तथैवेतन्न मनागप्यतिक्रमः।**
**ग्रन्थविस्तरसङ्क्षेपमात्रं भाषा न भिद्यते।।**
**औचित्यान्वयरक्षा च यथाशक्ति विधीयते।**
**कथारसविघातेन काव्यांशस्य च योजना।।**
**वैदग्ध्यख्यातिलोभाय मम नैवायमुपक्रमः।**

---

23 Dasgupta S.N. and De, S.K.: History of Sanskrit Literature, Vol. I, Univ. of Calcutta, 1947, p. 92

24 बृहत्कथायाः सारस्य सङ्क्षेपं रचयाम्यहम्।।
कथासरित्सागरे, कथापीठे, प्रथमलम्बके पृ. 1

प्राकृतभाषा परवर्तिनि काले जनसामान्यभाषा नासीत्, संस्कृतस्य तु व्यवहारः तदपेक्षया आसेतुहिमाचलं प्रवर्तमान आस। अत एव समेषां सुखबोधाय प्राकृतगाथानां छायां विधाय तासामध्ययनं विधीयते स्म। एतत् प्राकृतस्य संस्कृतच्छायाकरणमपि अनुवादस्यैवैकः प्रकारः। नवमशतके हरविजयकारेण महाकविना रत्नाकरेण ध्वनिगाथापञ्जिकेति नामधेयायां स्वकृतौ प्राकतभाषाया आनन्दवर्धनोदाहृता गाथाः छायया अनूद्य व्याख्याताः।

दशमे शतके *उपमितिभवप्रपंचकथायाः* प्रणेत्रा सिद्धर्षिणा स्वकीयं प्राकृतभाषोपनिबद्धा कथा *चंद्रकेलिचरितम्* इत्याख्या संस्कृतेऽनूदिता।

तथापि प्राचीनकाले संस्कृतभाषायाम् इतरभाषाभ्यः शाब्दिका अनुवादाः प्रायशो न प्राप्यन्ते। तदपेक्षया संस्कृताद् इतरभाषासु अनुवादाः अतिप्राचीनकालादेव बहुधा जाताः। संस्कृतस्य अनूदितेषु ग्रन्थेषु पञ्चतन्त्रं सर्वप्रथमं समुल्लेखार्हम्। पञ्चतन्त्रस्य पहेलवीभाषायामनुवादः ५७०-क्रिस्त्वब्दे ईरानदेशीयस्य नौशैरवाँ इति सम्राजः आदेशेन विहितः। अयमनुवादः सम्प्रति न प्राप्यते। परन्तु अमुमनुवादमाश्रित्य सीरीयाईभाषानुवादः विहितः स प्राप्यते। अथ च आरब्यभाषायाम् पारसीकभाषायां चानुवादाः पञ्चतन्त्रस्य जाताः, तेन विविधयोरोपीयभाषासु दाराशिकोहेन द्विपञ्चाशदुपनिषदां पारसीकभाषायां सिर्र-ए-अकबर इति नाम्ना अनुवादो विहितः। अस्यानुवादस्यैव अयं महिमा यद् भारतीया चिन्तनपरम्परा संसारे प्रशंसायाः कामपि काष्ठामधिरूढा।

तिलकमञ्जरीकारेण धनपालेन ऋषभपञ्चाशिका प्राकृतभाषायां विरचिता, अस्याश्च संस्कृतटीका स्वयं तेन विरचिता। प्राकृतभाषाबद्धं काव्यं न सर्वे अवगच्छेयुः, संस्कृतस्य क्षेत्रं प्राकृताद्विस्तृततरमिति विचिन्त्य तेन प्राकृतनिबद्धस्य स्वप्रबन्धस्य संस्कृतटीका कृतास्यात्।

शुकसप्ततिः संस्कृतकथापरम्परायां प्रसिद्धा। अस्याः मूलं प्राकृतभाषासु लोकभाषासु वा अवर्तत इति अनुमीयते।

मिनोसः मीनाचार्यो वा ग्रीसदेशीयो विपश्चिदभवत्। तस्य ग्रीकज्योतिषमुपजीव्य प्रणीतः संस्कृतग्रन्थो वर्तते *यवनजातकमिति।* केषाञ्चिन्मतेन ग्रन्थोऽयं तस्य स्वोपज्ञः, अयेषाममतेन कश्चित्पण्डितस्तदीयग्रन्थं संस्कृते अनूवाच।

संस्कृते इतरभाषाणां साहित्यस्यानुवादपरम्परा मुगलशासने आङ्ग्लशासने च सविशेषं पुष्टिं प्रयाता। मुहम्मदबिनतुग़लकस्य (१३२५-१३५१-ई.) उत्तराधिकारी आसीत् फिरोजशाहतुगलकः। तेन नैकेषां संस्कृतग्रन्थानां पारसीकभाषानुवादानां मातृकाः निर्मापिताः।[25]

कश्मीरेषु जैनुल्आब्दीनः महान् संस्कृतानुरागी सम्राट् बभूव। तस्य शासनकाले यथा योगवासिष्ठादयो बहवः संस्कृतग्रन्थाः पारसीकभाषायां तथैव नैके पारसीककथाग्रन्थाः संस्कृते अनुवादं प्राप्ताः।

सम्राज्ञि अकबरे शासति (१५४२–१६०५) नैके पारसीकभाषाग्रन्थाःसंस्कृते संस्कृतग्रन्थाश्चपारसीकभाषायामनूदिताः। अकबरनामेति अकबरस्य सर्वाङ्गीणं जीवनचरितं महामहोपाध्यायमहेश ठक्कुरेण *सर्वदेशवृत्तान्तसंग्रह* इति नाम्ना १५८० ईस्वीवर्षेऽनूदितमिति ज्ञायते।

वस्तुतोऽकबरस्य (१५५६-१६०५) शासनकाले अनूदितसाहित्यस्य अभूतपूर्व उपचयो जातः। अथर्ववेद-महाभारतादयःग्रन्थाःपारसीकभाषायामनूदिताः। संस्कृतपण्डिता अपि पारसीकग्रन्थानामध्ययने तेषां संस्कृतानुवादे च तत्परा अभवन्। अस्मिन् काले आरब्यपरम्पराश्रित्य दूरवीक्षणयन्त्रं अरबदेशस्य कस्यचित् ज्योतिर्विदः ब्राह्मणशिष्येण दूरवीक्षणयन्त्रं निर्मितम्। १६३०-ई.वर्षे आसफखानस्यानुरोधेन नित्यानन्दः ज़िफ-इ-शाह इत्याख्यस्य पारसीकभाषानिबद्धस्य ज्योतिषग्रन्थस्य

[25] Culture of Encounters – Sanskrit at The Moghal court – Audrey Truschke, South Asia Across Disciplines, Allen Lane (Penguin Books), 2016, p. 11

संस्कृतानुवादं व्यधात्।[26] षोडशसप्तदशशतकयोः अनुवादकार्यसौकर्याय पारसीकभाषाविद्भिः पण्डितैः नैके द्वैभाषिकाः कोशाः निर्मिताः। सूर्यदासस्य संस्कृतपारसीकभाषाकोशः, कृष्णकवेः पारसीकपदप्रकाश इति तत्रोल्लेखमर्हतः। सूर्यदासेन आरब्यज्योतिषशास्त्रस्य पारिभाषिकशब्दावल्याः संस्कृतसन्धानमपि स्वकोश विहितम्। मलाजिद्वेदांगरायश्च पारसीकप्रकाशे विमर्शमिमं विस्तारयामास।

**संस्कृतस्य तमिलभाषायाश्च अनुवादद्वारेण पारस्परिकत्वम्**

संस्कृतं तामली चैव शङ्करस्य नयनद्वयमिति अभिहितं केनित् तमिलकविना।[27] दक्षिणापथे पल्लव-चोल-पाण्ड्यसाम्राज्येषु तमिलेन सह संस्कृतभाषाऽपि सम्पोषिता। एतेषां राज्ञां शिलालेखेषु उभे अपि भाषे युगपत् प्रयुक्ते। सहैव च संस्कृतभाषायाः तमिले, तमिलाच्च संस्कृतभाषायामनुवादस्य परम्परा विकासमाप। सौम्यजामातृमुनेः (1370-1444) पुत्रः अभिरामवरः स्वपितामहस्य तमिलग्रन्थम् *उपदेशरत्नमालाख्यं* संस्कृतेऽनूदितवान्। गुणभद्रविरचितस्य उत्तरपुराणस्य नैकानि रूपान्तराणि संस्कृते तमिले च सञ्जातानि। तेषु सोमेश्वरस्य *यशस्तिलकचंपूः*, वादिराजकृतं *यशोधरचरितं* हरिभद्रकृतं *यशोधरकाव्यं* च संस्कृते, *यशोधरकाव्यं* तमिले चोल्लेखमर्हन्ति।[28] सर्वनंदी 458ई.-वर्षे तमिलभाषायां १५३६-पद्येषु ज्योतिर्विद्याविषयकं ग्रन्थमेकं न्यबध्नात्। मूलग्रन्थस्तु नोपलभ्यते, किन्त्वेतस्य द्वादशशतके सिंहसूरिणा विहितः संस्कृतानुवादः प्राप्यते। षोडशशतके राज्ञो रघुनाथनायकस्यामात्यो गोविन्ददीक्षितः नानाशास्त्रविशारदो विशेषतोऽद्वैतवेदान्ते निष्णातो न केवलं नानाटीकाग्रन्थान्, सङ्गीतसुधेति सङ्गीतशास्त्रविषयकं

---

[26] तत्रैव, पृ. 38

[27] Contribution of Tamilnadu to Sanskrit, Institute of Asian Studies, C.S. Sundaram, Chennai, 1999. (Forword by Dr N. Mahalingam) इति ग्रन्थे एन्. महालिङ्गम्-महोदयस्यभूमिका।

[28] तत्रैव, पृ. १४५-४८

ग्रन्थं च प्रणिनाय *तिरुवैयारमाहात्म्यस्य* तमिलभाषायामनुवादमपि व्यदधात्।[29]

तमिलभाषायाः साहित्ये शठकोपयतिनो नालियार्-प्रबनधो वेदवन्महनीयो मतः। अयं *द्रविडोपनिषद्* इत्यप्यभिधीयते। अस्मिन् २४000 पद्यानि सन्ति। एतस्य प्राचीनकालेऽनुवादो वेदान्तदेशिकेन कृतः। वेदान्तदेशिकेनैव आलवारशठकोपाचार्यस्य तिरुवाय्मोलिप्रबन्धस्य पद्यानि *द्रमिडोपनिषत्तात्पर्यरत्नावल्यां द्रविडोपनिषत्सारे* चानूदितानि। वेदान्तदेशिको महान् दार्शनिको महाकविश्च। तस्य अनुवादेष्वपि मौलिकता रस्यते। प्रस्तूयते *द्रमिडोपनिषत्तात्पर्यरत्नावल्या* एकमुदाहरणम् -

**निस्सीमोद्यद्बुधत्वादमितरसतयाऽनन्तलीलास्पदत्वात्**
**स्वायताशेषसत्तास्थितियतनभिदा वैभवाद्वैश्वरूप्यात्।**
**त्र्यक्षब्राह्मात्मभावापत्सदसदवगतेः सर्वतस्तेषु पूर्तेः**
**पश्यन् योगी परं तत्पदकमलनतावन्वशादात्मचित्तम्।।**

**संस्कृते अनुवादस्य आधुनिकी परम्परा –**

अष्टादशोनविंशतितमयोः शतकयोः आङ्ग्लभाषायाः ग्रन्थानां संस्कृते अनुवादस्य कश्चन विपुलः क्रमः प्रावर्तत। केवलं बाइबिलस्यैव ऊनविंशशतके द्वादश अनुवादाः जाताः, स्वातन्त्र्योत्तरकाले च पुनरपि नवीनयोः द्वयोरनुवादयोः प्रकाशनं समजनि।[30] वैदेशिकानां क्रिस्तुधर्मप्रचाराय विधीयमाना एतादृशा अनुवादप्रयासाः पारम्परिकसंस्कृतपण्डितानपि आङ्ग्लभाषायाः साहित्यस्य संस्कृतानुवादाय प्रेरयन्ति स्म। तेन शेक्सपीयरस्य नाटकानां बहवोनुवादाः लक्ष्मणशास्त्रितैलङ्गसदृशैः विपश्चिदपश्चिमैः तदानीन्तने काले विहिताः। मथुरानाथशास्त्री गाहासतसईकाव्य दोधकच्छन्दसि रमणीयं संस्कृतानुवादं विधाय नवीनामनुवाददिशमुदघाटयत्। जर्मनीदेशोद्भवो विद्वान् कार्लकेपलरो यवनशतकम् सुभाषितमालिकां च प्रणीय अत्यन्तं

[29] तत्रैव, पृ. ७



[30]. हीरालालशुक्लः, संस्कृत का समाजशास्त्र, पृ. 68.

स्तुत्यमनुवादनिदर्शनं प्रस्तुतवान्।[31]. अयमासीद् भारतमनीषाया नवजागरणकालः। संस्कृतचन्द्रिका-मञ्जूषा-संस्कृतसाहित्यपरिषत्पत्रिकादिसंस्कृतपत्रिकासु बङ्किमचन्द्रस्य उपन्यासानाम् इन्दिरा-लावण्यमयी-दुर्गेशनन्दिनी-रजनी-कपालकुण्डला-क्षत्रियरमणी-राधारानी-प्रभृतीनामनुवादाः प्राकाश्यन्त। पुरुषोत्तमलक्ष्मणवैद्यस्य वाल्मीकिविजयः (1962) हरप्रसादशास्त्रिण उपन्यासस्य उत्तमोऽनुवादः। आधुनिककाले संस्कृतसाहित्ये नानानवीनविधानां काव्यरूपाणां वा प्रवर्तकः प्रेरयता सत्कवीनां महाकविर्भट्टमथुरानाथः शास्त्री अनुवादक्षेत्रे महतः अवदानस्य कृते चिरस्मरणीयः। तेन प्राकृतकाव्यकोशो गाहासत्तसई इति संज्ञप्तो ललितमधुराभिरार्याभिः संस्कृतेऽनूदितः। संस्कृतरत्नाकरे स्वसम्पादिते चायं विविधभाषाग्रन्थानां संस्कतानुवादान् प्रकाशयामास।

आधुनिककाले संस्कृतसाहित्ये नानानवीनविधानां काव्यरूपाणां वा प्रवर्तकः प्रेरयता सत्कवीनां महाकविर्भट्टमथुरानाथः शास्त्री अनुवादक्षेत्रे महतः अवदानस्य कृते चिरस्मरणीयः। तेन प्राकृतकाव्यकोशो गाहासत्तसई इति संज्ञप्तो ललितमधुराभिरार्याभिः संस्कृतेऽनूदितः। संस्कृतरत्नाकरे स्वसम्पादिते चायं विविधभाषाग्रन्थानां संस्कतानुवादान् प्रकाशयामास।

उमरखय्यामकवेर्द्वादशप्राया अनुवादाः संस्कृते सन्ति। महाकवेर्ग़ालिबस्य दीवानकाव्यं जगन्नाथपाठकेन परमानन्दशास्त्रिणा चातिरम्यमनूदितम्। बलरामशुक्लेन पारसीककाव्यानुवादकत्वेन प्रशस्यं कर्म सम्पादितम्। ऐतैःअनुवादैः संस्कृतरचनासु पारसीकभाषाया लालित्यं सङ्क्रान्तम्।

---

[31] यवनशतकम् गयाचरणत्रिपाठिना पुनः सम्पादितम्, राष्ट्रियसंस्कृतसंस्थानस्य नवविमर्श इतिशोधपत्रिकाया तृतीयाङ्के २०१०तमे ई.वर्षे प्रकाशितम्। तैनेव सह कापेलरस्य सुभाषितमालिकाऽपि सत्यव्रतशास्त्रिणः ‘Sanskrit Writings of European Scholars, Vijaya Books, Delhi, I Edition, 2012, 35-51, 89 इति पुस्तके प्रकाशिता।.

संस्कृते विंशशतके इस्लामधर्मग्रन्थस्य कुराणस्य द्वौ अनुवादौ, महात्मगान्धिन आत्मकथाया अपि द्वौ अनुवादौ शेक्सपीयरकवेर्हेमलेटनाटकस्य चापि द्वौ अनुवादौ जवाहरलालस्य नेहरोः आत्मकथायाश्च पद्यबद्धोऽनुवादो जातः। अन्येषु अनुवादेषु समग्रस्य महाकविग़ालिबकृतस्य दीवान इति सङ्ग्रहस्य जगन्नाथपाठककृतोSनुवादः विद्यापतिपदावल्याः काशीनाथमिश्रकृतश्चानुवाद उल्लेखमर्हतः। साम्प्रतिकेषु अनुवादकेषु भट्टमथुरानाथ शास्त्री, अप्पा शास्त्री राशिवडेकरः, प्रेमनारायणो द्विवेदी, रव्वा श्रीहरिः, शतावधानी आर.गणेशः, बलरामशुक्लः, उल्लेखार्हाः सन्ति।

एकविंशशतके अनूदिता केचन ग्रन्था सन्ति -

अरण्यानी, (नाटकम्) मनोरञ्जनदासस्य ओडियारूपकम् ‘अरण्य पसल’म)

आमोदतरङ्गिणी, (कथासङ्ग्रह:) डॉ. हरिमोहनझाकृतस्य खट्टर काका इत्यस्य अनुवादः डॉ.निरञ्जन मिश्र, आर.डी.पाण्डेय, सत्यम् पब्लिशिंग हाउस, एन-3/25, मोहन गार्डन, उत्तम नगर, नई दिल्ली, 2011

कात्यायनीव्रतम्, एस. नीलकण्ठशास्त्री, (‘आण्डाळ्-तिरूप्पावै’ अनुवादः

काबुलीवाला, (बालनाटिका) मूल बंगला कथाकार-श्री रवीन्द्रनाथटैगोर:, मराठीनाट्यरूपान्तरकार:-श्री पुरूषोत्तमदारह्वेकर:, नाट्यरूपान्तरकार: संस्कृत अनुवादः- सौ.दुर्गापारखी

कालहस्तीश्वरशतकम्, (तेलगुग्रन्थस्य) ति.गु. वरदाचार्य:, गुण्टूर, 1956।

गान्धीसूत्राणि, अनु. डी. एस. शर्मा

चन्द्रसेन: दुर्गदेशस्य युवराजः, (हेमलेटनाटस्य अनुवादः) एस. डी. जोशी, विघ्नहरिदेव, पून

चोरचत्वारिंशीकथा, (अरेबियन-नाइट्स-तः अली बाबा एण्ड फोर्टी थीव्स् इत्यस्य अनुवादः) गोविन्दकृष्णमोडकः, कर्नाटक प्रिंटिंग प्रेस, मुंबई, 1934।

दीपदानम्, (रामकुमारवर्मणो दीपदानाटकस्य अनुवादः) विघ्नहरिदेवः

दूरे तत्तीरे, (दूर उस पार इति हिन्दीकवितासङ्ग्रहस्य संस्कृतानुवादः) डॉ. श्रीत्रिविक्रमपतिशर्मा,

ध्रुवस्वामिनी, (जयशंकरप्रसादस्य ध्रुवस्वामिनीनाटिकाया अनुवादः) पं. श्रीरामदवे

निर्मला (मुंशी प्रेमचन्दस्य अनूदित उपन्यासः श्रीरामदवे

मुक्तविहगाः, (रवीन्द्रनाथकाव्यस्य अनुवादः) गं. वि. कुलकर्णी

मोहनदासकरमचन्दमहाभागस्य आत्मचरितम् अथवा मम सत्यप्रयोगः, (अनूदितम्) (महात्मागान्धिनः आत्मकथाया अनुवादः) क्षीरोदचन्द्रदाशः

रवीन्द्ररूपकाणि, (रवीन्द्रनाथस्य चतुर्णां रूपकाणामनुवादः) के.टि. पाण्डुरङ्गिः

रूमीपञ्चदशी रूपान्तरकारः-राधावल्लभत्रिपाठी

रूमीरहस्यम्, रूपान्तरकारः स एव

वातावरणनाटकम्, (मैथिलीनाटकस्य बसातस्य अनुवादः) सं. गोविन्दझाः, कामेश्वर सिंह संस्कृत विश्वविद्यालय, दरभंगा, 1984।

संस्कृतरवीन्द्रम्, (रवीन्द्रसाहित्यस्य अनुवादः) सं. वे. राघवन्

समर्थः स्वामी रामदासः, (चरितकाव्यम्) मूल मराठी लेखक-प्र.ग.सहस्रबुद्धे, संस्कृत अनुवादः-प्रो. रेवाप्रसादद्विवेदीसनातनः।

समृद्धिश्च द्वितीयाया भाषाया अपि जायते।
शब्दानां नूतनानां च प्रौढोक्तीनां तथैव च।।
आधानेन व्यवहारेण
भावानामपि संसारो नवीनश्चावतार्यते।
संवेदना विभिन्नाश्च जायन्ते गोचरीकृताः।।

**अनुवादैः इतिहासज्ञानम्**

शिवाजीमहाराजेन राज्ञे जयसिंहाय लिखितं पत्रं गलगली रामाचार्यः संस्कृतेऽनूदितवान्। तेन प्रतिपद्यमविकलमनुवादो व्यधायि। अनुवादे षष्टिः वसन्ततिलकावृत्तानि सन्ति। प्रत्येकं पद्यं हृदयाद् विनिर्गतम्। उदाह्रियतेऽस्य अन्तिमं पद्यम् -

**सञ्छादयेन्निजमुखं भगवान् दिनेशः**
**सन्ध्यापटाञ्चलवशादवशो यदा श्वः।**
**खड्गस्तदा मम निरावरणो हि भूयात्**
**स्वस्त्यस्तु विज्ञवर ते रजपूतवीर।।**

**इति दशमोऽध्यायः**

## उपसंहारः

अपारं क्षेत्रं वर्तते अनुवादशास्त्रस्य अनुवादकर्मणश्च। बहु तत्र करणीयमवशिष्यते। अस्मादृशैरत्र यत् किमपि कृतं तदत्यल्पमेव। संस्कृतपरम्परासम्मतस्य अनुवादशास्त्रस्य निर्माणमपि सर्वाङ्गीणतया करणीयम्। संस्कृतेऽनुवादाः संस्कृताच्चेतरभाषास्वनुवादाः यावन्त इष्यन्ते तावतां सहस्रांशमपि नैतावता साधितम्। तथाहि हिन्द्याङ्ग्लीप्रभृतिभाषाणां यद्विज्ञानसाहित्यं काव्यादि वा तस्य अत्यल्पमेव संस्कृतानुवादे अवतीर्णम्। संस्कृतस्य ग्रन्थेषु समेषां ताण्ड्यकौशीतकिप्रभृतिब्राह्मण-ग्रन्थानां तथा च शुल्बसूत्रादीनां, पुराणेषु नीलमत-साम्ब-दुर्वासा-कल्कि-नन्द-सौर-पाराशराद्युपपुराणानाम्, तन्त्रालोकादिशैवशास्त्रग्रन्थानां नाट्यशास्त्रालङ्कारशास्त्रक्षेत्रे विष्णुधर्मोत्तरतृतीयखण्ड-अभिनवभारती- शृङ्गारप्रकाश-नृत्तरत्नावली-सङ्गीतरत्नाकरादीनाम्, साहित्ये हरविजय-कप्फिणाभ्युदय-श्रीकण्ठचरितादिमहनीयानां महाकाव्यानां हिन्दीभाषायामेव समग्रा अनुवादा न जाता इति दिक्।